अतः सद्यःशौचेऽपि तद्दिने दश पिण्डान्[1] दत्वा क्षौरग्रह-वस्त्रशुद्ध्यादिकञ्च कृत्वा तद्दिने क्षौरानन्तरं कर्म्मनिषेधात् तत्पर-दिन एव वृषोत्सर्गैकोद्दिष्टादिकं कुर्व्वन्ति प्राञ्चः॥ १

तथाचादिपुराणम्,—

मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा।
भागिनेयसुतानाञ्च सर्व्वेषां त्वपरेऽहनि॥

अत्र सद्यःशौचिनामपि मित्रापत्यादीनां सर्व्वेषामपरेऽहनीति श्राद्धं दर्शितम्। व्याख्यातञ्चैतद्वचनं श्राद्धविवेके-

यस्य यावदशौचमुक्तं तस्मादपरदिन इत्यर्थः।

वृद्धाश्च पठन्ति—

सद्यःशौचदिने कुर्य्याद्दशपिण्डान् प्रयत्नतः।
पुत्रादिरापरेच्छ्राद्धमेकोद्दिष्टं परेऽहनि॥ इति।

अतएव द्वादशाहश्राद्धे अशौचान्ततृतीयदिन[2]विहितत्वेनैकरूप एवाभिलापः सर्व्वत्रैव सिद्ध इत्यपि ध्येयम्।

केचित्तु—शुद्धिदिन इत्यभिलापं कुर्व्वन्ति। तत्तु पक्षिण्याद्य-शौचेष्वव्यापनाद्धेयमेवेति।

अशौचान्ताद्द्वितीयेऽहनीति प्राचीनप्रयोग एव साधीयान्। न च वाच्यमत्र द्वितीयेऽहनीति च पुनरुक्तवैफल्यमिति, गरुड़-पुराणादि नानामुनिवचनबलादस्यपदप्रयोगस्यावश्यकत्वादशौचान्ता-द्वितीयेऽह्नीति वचनप्रतिपादितनिमित्ततया द्वितीयेऽह्नीति प्रयोग-

---

१ ग, दशपिण्डादिकम्।
२ ग पुस्तके, अशौचान्तात्तृतीयदिन—।

नियमाच्च जवाकुसुममेकमहौषधादिवत् सामान्यविशेषभावेनान्वयोपपत्तेः ।

ननु चिरदिनसाध्ये कर्म्मणि एकदिनसाध्ये वा भिन्नतिथौ कीदृशो वाक्यान्वयः ।

अद्यामुकतिथौ करिष्ये इत्यत्र वर्त्तमानतिथेस्तदहोरात्रस्य च साङ्गप्रधानकर्म्मा[१]धिकरणत्वावगतेस्तत्र च तस्यानुत्पन्नत्वात्[२] विरुद्धोऽभिलापः ।

न च करिष्ये इत्यस्यादिक्रियानिष्पादनमर्थ इति वाच्यम्, लक्षणाप्रसङ्गात् करिष्ये इत्यत्र कामनान्वयवशात् आदिक्रियानिष्पादनेनैव कामनाया निष्पन्नत्वादपरासां क्रियाणामनुष्ठानवैफल्यप्रसङ्गाच्च। साङ्गप्रधानकर्म्मणामेव फलश्रुतेरादिक्रियायां कामनानन्वयाच्चेति ।

अत्र केचित्—

अद्यामुकतिथावमुककाम इति कामनाधिकरणत्वेनान्वय इति समादधति ।

तन्न मनोरमं, मासपक्षतिथीनां तत्तद्विधिवाक्येषु कर्म्माधिकरणत्वेनावगमात् चिरसाध्ये कर्म्मणि तादृशविध्यभावेऽपि तथैवान्वयस्य योग्यत्वात् तिथ्यादिना कामनान्वयस्य [३]प्रतीत्यनुसन्धानविरहाच्च । कुत्रचिन्मासस्य विधानबलात् कर्म्माधिकरणतयाऽन्वये सति

---

१ ग पुस्तके, कर्म्मपदं नास्ति ।

२ ग पुस्तके, तस्यानुपपन्नत्वात् ।

३ ख पुस्तके, प्रतीत्यर्थसन्धान ।

तिथिविशेषस्य विधानाभावेऽपि मासपक्षतिथीनाञ्चेति वचनादव-श्योल्लेखे तिथेः कामनान्वयस्यात्यन्तायुक्तत्वाच्चेति[१] ॥

वर्द्धमानोपाध्यायस्तु—

एकदिने तिथिद्वयसाध्ये चिरदिनसाध्ये च कर्म्मणि अद्यामुक-तिथावारभ्येत्यभिलाप इति समाधत्ते।

तदा निर्व्विवाद एवान्वय इति।

अद्यामुकतिथावमुककामनया अमुककर्म्म करिष्ये इत्यभिलापे कृधातोः प्रयत्नमात्रार्थत्वेन अमुककामनया अमुककर्म्मणि यतिष्ये इत्यर्थे सति कामनायाः प्रयत्नमात्रान्वितत्वात् वर्त्तमानतिथौ येन केनापि यत्नेनानुष्ठितेनैव तत्तदुक्तकामनया तत्तिथौ प्रयत्नस्य निर्वाहात् तिथ्यन्तरेऽपि क्रियान्तरानुष्ठानमविरुद्धमिति प्राञ्चः।

केचित्—

ब्राह्मणोद्देशपक्षे दातुमहमुत्सृज्ये इति दानवाक्यमविचार्य्य वर्णयन्ति।

तदुपेक्षणीयं[२] दाधातोः परस्वीकारफलकद्रव्यत्यागार्थत्वेन उत्सृज्य इत्यस्यानन्वयात् दातुमित्यस्य स्वीकारमापादयितुमित्यर्थे लक्षणा-प्रसङ्गात् स्वाधीने च शब्दप्रयोगे लक्षणाया अयुक्तत्वाच्च। ब्राह्मणा-याहमुत्सृजेऽइत्यपि चेयं दानगोचरतयैव फलश्रवणादुत्सर्गस्य त्याग-मात्रार्थत्वेन फलानन्वयात् विधिवाक्यश्रुतदाधातुप्रयोगस्यैव साधी-यस्त्वाच्च।

---

१ ग पुस्तके, कामनान्वयेऽयोग्यत्वात्। खं, अत्यन्ताभ्यर्हितत्वाच्च।

२ ख पुस्तके, तन्नापेक्षणीयम्।

तस्माद्ब्राह्मणासम्पत्तावपि यथागोत्रनाम्ने ब्राह्मणायाहं संप्रददे इत्येव वाक्यं साधीयः ।

न च तदानीं स्वीकाराभावात् कथं दाधातुप्रयोग इति वाच्यम् । भवेदेवं यदि स्वीकारसाहित्येन त्यागो दाधात्वर्थः स्यात् ।

न च तथा, साक्षाद्ब्राह्मणपक्षेऽपि त्यक्तस्यैव स्वीकारसम्भवात् स्वीकारफलकत्यागस्यैव दाधात्वर्थत्वात् । एवं सति त्यागाव्यवधानेन[१] वा किञ्चिद्विलम्बेन वा स्वीकारो न किञ्चित्क्षतिकर इति सर्व्वविदुषां सम्मतमित्यास्तां विस्तरः । प्रकृतमनुसरामः ।

अथाशौचान्तद्वितीयदिनेऽशौचकालीनमृन्मयभाण्डानि परित्यज्य गृहादिकं शोधयेत् ।

देवलः—

अघाहःसु व्यतीतेषु सुस्नाताः कृतमङ्गलाः ।
आशुच्यादिप्रमुच्यन्ते ब्राह्मणान् स्वस्ति वाच्य च ॥

सुस्नाता इति यथाविधिकृतसशिरस्कस्नाना इत्यर्थः ।

अत्र च एकादशाहे विरमेदिति पैठीनसिवचनात् तर्पणं न कार्य्यम् ।

एतच्च स्नानं सूर्य्योदयानन्तरं कार्य्यम्—

उदयादोदयं भानोः सावनं परिकीर्त्तितम् ।
सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा ॥
मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते ।

इति सूर्य्यसिद्धान्तवचनात् ।

---

१ ग पुस्तके, त्यक्तस्य गवादेरव्यवधानेन ।

अत्र केचित्—

सूर्य्योदयात् पूर्व्वमेव प्रातःसन्ध्यायाः कालत्वात् तत्र चाशौचा-क्रान्तत्वेनाधिकाराभावात् सूर्य्योदयात्परमेव शुद्धिविधानात् तद्दिने प्रातःसन्ध्यालोप एवेत्याहुः। तन्न।

आसायमाहुतेः प्रातराहुतिर्नात्येति आप्रातराहुतेः सायमा-हुतिः।

इति गोभिलवचनात् होमन्यायेन तुल्यकाङ्क्षितत्वात् तुल्य-कालविधानाच्च अतीतामप्युपासीतेति वचनाच्च होमवन्मुख्यकाला-लाभे सायंकालपर्य्यन्तमानुकल्पिककालविधानात्।

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।

इति दक्षवचने सन्ध्यायाः शुचित्वसम्पादकत्वाच्च। सन्ध्यायाः कर्म्माङ्गत्वेन च तदभावे तद्दिनकर्त्तव्यकर्म्मणां वैगुण्यप्रसङ्गात् प्राचीन-सर्व्वसंग्रहसम्मतत्वाच्च स्नानात् परं प्रातःसन्ध्या कर्त्तव्या इति।

कृतमङ्गला इति गोसुवर्णाग्निदधिदूर्व्वाघृतादिस्पर्शश्रीगोविन्द-नामग्रहणं कार्य्यमित्यर्थः। ब्राह्मणान् स्वस्ति वाच्य ब्राह्मणद्वारा शान्त्युदकसम्पादनेन स्वस्त्ययनं कृत्वेत्यर्थः।

श्वो भूते शान्तिं कृत्वा एकोद्दिष्टं प्रदायेति हारीतवचनात् ब्राह्मणालाभे स्वयमेव शान्तिं कुर्य्यात्।

एतच्च शान्त्युदकग्रहण[1]मङ्गल्यद्रव्यस्पर्शनं मरणाशौच एव न जननाशौचे मरणाशौचमुपक्रम्य विधानात् "शुच्यादिप्रमुच्यन्ते" इत्यनेन सशिरस्कस्नान-गोसुवर्णाग्निघृतादिमङ्गलद्रव्यस्पर्श-श्रीगोविन्द-

---

[1] ग पुस्तके, —स्पर्श—।

नामग्रहण-शान्त्युदकैर्विना अशौचनिवृत्तिर्नास्तीति हारलता-कारादयः।

शान्तिस्तु स्वशाखोक्तैव कार्य्या इति।

सर्व्वत्र वामदेव्यस्य गानमित्यथवा त्रिधा।

इति छन्दोगपरिशिष्टवचनात् सामगैर्वामदेव्यगानेन शान्तिः कार्य्या गानाशक्तौ तु त्रिधा पाठेन[1] इति।

वामदेव्य ऋचस्तु—

कयानश्चित्र इति।

कस्त्वा सत्यो मदानामिति।

अभीषुणः सखीनामिति।

स्वस्ति न इन्द्रो वृद्धश्रवा इति, चतस्रः।।

आदावन्ते च गायत्र्या शान्तिकरणम्।

यत्तु शन्नोदेवीति सूक्तेन प्रथमं, द्वाभ्यां द्वितीयं शन्नोदेवी-रग्नयः शन्न इन्द्राग्नी तदस्तु मित्रावरुणा इति तृतीयं, शन्नो वातेन्द्र पृथिवी शान्तिरिति चतुर्थम्। उभयत्र सर्व्वत्र शान्तिं सावित्रीं कुर्य्यादिति पैठीनस्युक्तं चतुर्द्धा शान्तिकरणं तदृक्चतुष्टयोक्तत्वेन ऋग्वेदिनामेवेति।

यजुर्वेदिनाम्—

ऋचं वाचं प्रपद्ये इत्यादि द्यौः शान्तिरित्यन्तैः सप्तदशभि-र्मन्त्रैरादावन्ते च गायत्र्या शान्तिकरणम्।

ॐ कारेण व्याहृतिभि र्गायत्र्यादावन्ते चेति कात्यायनवचनात्।

---

१ ग पुस्तके, पठेत्।

तदयं प्रयोगः।

दान्तः कश्चिद्ब्राह्मणः स्वयं वा कुशैः शिरसि जलविन्दुप्रक्षेपरूपां शान्तिं कुर्य्यात्। प्रथमं प्रणवव्याहृतिसावित्रीभिः।

ॐ स्वचं वाचं प्रपद्ये मनोयजुः प्रपद्ये सामप्राणं प्रपद्ये चक्षुः-श्रोत्रं प्रपद्ये। वागोजः सहोजो मयि प्राणापानौ ॥१॥

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृन्नं बृहस्पतिर्मे तद्दधातु शन्नो भवतु भुवनस्य यस्पतिः ॥२॥

ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥३॥

कयानश्चित्र आभुवदूती सदावृधः सखा।
कया सचिष्ठया वृता ॥४॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः।
दृढा चिदा रुजेवसु ॥५॥
अभीषुणः सखीनामविता जरितॄणां।
शतम्भवाः स्यूतिभिः[1] ॥६॥
कया त्वं न ऊत्याभिः प्रमन्दसे वृषन्।
कया स्तोतृभ्य आभर[2] ॥७॥
इन्द्रो विश्वस्य राजति।
शन्नो अस्तु द्विपदेशञ्चतुष्पदे ॥८॥
शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा।
शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥९॥

---

१ ग पुस्तके, स्यूतये। २ ख, ग पुस्तकद्वये, आभव।

शन्नो वातः पवतां शन्नस्तपतु सूर्य्यः ।
शन्नः कनिक्रदद्देवः पर्जन्योऽभिवर्षतु ॥१०॥
अहानि शं भवन्तु नः शं रात्रिः प्रतिधीयताम् ।
शन्न इन्द्राग्नी भवतामवोभिः ।
शन्न इन्द्रावरुणा वातहव्या ।
शन्न इन्द्रापूषणा वाजसातौ ।
शमिन्द्रासोमा सुविताय शंयोः ॥११॥
शन्नो देवीरभीष्टये आपो भवन्तु पीतये ।
शं योरभिस्रवन्तु नः ॥१२॥
स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छानः शर्म्म सप्रथाः ॥१३॥
आपो हिष्ठा मयोभुवस्ता न ऊर्ज्जे दधातन ।
महेरणाय चक्षसे ॥१४॥
यो वः शिवतमोरसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥१५॥
तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥१६॥

द्यौः शान्तिरन्तरीक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्ति र्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः शान्तिरेव शान्तिः साम शान्तिरेधि[१] ।१७।

---

१ ग पुस्तके, सामशान्तिरेधि इत्यंशो नास्ति ।

पुनरपि प्रणवव्याहृतिसावित्रीभिरिति यजुर्वेदिनाम् ।

[1]सामगानान्तु प्रथमं प्रणवव्याहृतिसावित्रीभिः । ततश्च—

*ॐ कयानश्चित्र आभुवदूती सदावृधः सखा ।*

कया शचिष्ठया वृता ।

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।

दृढा चिदा रुजे वसु ।

अभीषुणः सखीनामविता जरितॄणां ।

शतम्भवा स्यूतये ।

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

स्वस्ति नस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

पुनरपि प्रणवव्याहृतिसावित्रीभिरिति । एवं शान्तिं कृत्वा अशौचकालजनितपापक्षयार्थं काञ्चनादिकं किञ्चिद्देयम् ।

यथा कूर्म्मपुराणे—

दशाहात्तु परं सम्यक् विप्रोऽधीयीत धर्म्मवित् ।

दानञ्च विधिना देयमशुभात्तारकं हि तत् ॥

काञ्चनादिकं तद्दैवतां सम्प्रदानञ्चाभ्यर्च्च्य इदं काञ्चनं तुभ्यमहं ददानीति द्विजकरे जलदानं ददस्वेति तेनोक्ते वारिणा काञ्चनं प्रोक्ष्य वामहस्तेन स्पृष्ट्वा—

ॐ अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा अशौचकालजनितपापक्षयकामोऽमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय इदं काञ्चनमर्च्चितमग्निदैवतं तुभ्यमहं संप्रददे । इति द्विजकरे[2] दद्यात् । ततो

१ ख पुस्तके, सामगास्तु । २ ग पुस्तके, जलं दद्यात् ।

गृहीता स्वस्तीति वदेत्। ब्राह्मणोद्देशपक्षे यथासम्भवगोत्रनाम्ने ब्राह्मणायाहं संप्रददे इति।

ततः— ॐ अद्येत्यादि अशौचकालजनितपापक्षयकामनया काञ्चनदानप्रतिष्ठार्थं दक्षिणामिदं रजतं पितृदैवतं अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दक्षिणां दद्यात्।

ततो गृहीता स्वस्तीत्युक्त्वा दक्षिणां स्पृष्ट्वा गायत्रीं कामस्तुतिञ्च पठित्वा काञ्चनमिदमग्निदैवतमिति वदेत्। तत आचारात् तिलपूर्णपात्रं काञ्चनगर्भमुत्सृजन्ति।

वचनञ्च,—

प्रेतमुद्दिश्य यो दद्याद्धेमगर्भांस्तिलान्नृप।
यावन्तस्ते तिलाः स्वर्गे तावत्कालं स मोदते॥ इति।

वैतरणीधेनुदानञ्च,—

आसन्नमृत्युना देया सवत्सा गौस्तु पूर्व्ववत्।
यमद्वारे महाघोरे तप्ता वैतरणी नदी।
ताञ्च तर्त्तुं ददाम्येतां कृष्णां वैतरणीञ्च गाम्॥

इत्यग्निपुराणवचनात्।

सुवर्णं रजतं वापि यथोत्पन्नन्तु माधवि।
तत्र लोकहितार्थाय गोप्रदानं विशिष्यते॥
[१]तथैव द्वीपदानेन क्षिप्रं मुच्येत किल्बिषात्।

इति वराहपुराणवचनाच्च आसन्नमरणस्यैव कार्य्यम्। तत्राशक्तौ पुत्रादिनाऽशौचान्तद्वितीयदिने क्रियते इत्याचारः।

१ ग पुस्तके, तत्रैव।

हेमगर्भतिलान् विष्णुं संप्रदानञ्चाभ्यर्च्च इमान् हेमगर्भतिलान् तुभ्यं ददानीति द्विजकरे जलदानं दद्खेति तेनोक्ते वारिणा तिलानभ्युक्ष्य वामहस्तेन धृत्वा कुशतिलजलान्यादाय,—

ॐ विष्णुदेहोद्भवाः पुण्यास्तिलाः पापप्रणाशनाः[१]।
प्रेतस्वर्गं प्रयच्छन्तु संसारार्णवतारकाः॥

इति पठित्वा ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्म्मणो मरणाशौचान्ताद्द्वितीयेऽह्नि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्म्मण एतत्तिलसमसंख्यकालस्वर्गवासकामोऽमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय तिलानिमान् हेमगर्भान् गन्धाद्यर्च्चितान् विष्णुदैवतान् तुभ्यमहं संप्रददे इति द्विजकरे कुशजलं दद्यात्। ग्रहीता करमध्येनाग्नेयतीर्थेन स्पृष्ट्वा स्वस्तीति वदेत्।

ब्राह्मणोद्देशपक्षे तु यथासम्भवगोत्रनाम्ने ब्राह्मणायाहं संप्रददे इति।

ॐ अद्येत्यादि अमुककामनया तुभ्यं कृतैतद्धेमगर्भतिलदानप्रतिष्ठार्थं दक्षिणामिदं काञ्चनमग्निदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दक्षिणां दद्यात्। ग्रहीता स्वस्तीत्युक्त्वा दक्षिणां स्पृष्ट्वा गायत्रीं कामस्तुतिञ्च पठित्वा तिला एते विष्णुदैवता इति वदेत्। एवमन्येष्वपि दानेषु बोद्धव्यम्।

ननु वक्ष्यमाणवचनेषु सर्व्वत्र कर्त्तृनिष्ठमेव फलं श्रूयते तत् कथं उद्देश्यनिष्ठं स्यात्। सत्यम्—

---

१ क पुस्तके, पापप्रणाशिनः।

ततस्तोद्दिश्य पितरं ब्राह्मणेभ्यो धनं ददौ ।

इति रामायणात् ।

रत्नवस्त्रमहीयानसर्व्वभोग्यादिकं[1] वसु ।

विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ॥

इति विष्णुपुराणाच्च ।

न चात्र विश्वजिन्न्यायात् स्वर्गः फलमिति वाच्यम्, श्रुतफलेनैवोपपत्तौ फलान्तराकाङ्क्षाविरहात् गौरवाच्च ।

ततः कृष्णगवीं रुद्रं ब्राह्मणञ्च[2] सम्पूज्य पूर्व्ववत् द्विजकरे जलदानादिकं कृत्वा,—

ॐ उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।

दातारं त्रायते यस्मात्तस्माद्वैतरणी स्मृता ॥

यमद्वारे महाघोरे तप्ता वैतरणी नदी ।

ताञ्च तर्त्तुं ददाम्येतां कृष्णां वैतरणीञ्च गाम् ॥

इति पठित्वा ॐ अद्येत्यादि यमद्वारावस्थितवैतरणीनदीसन्तरणकाम इमां कृष्णगवीं[3] सवत्सामर्च्चितां वैतरणीसंज्ञिकां रुद्रदैवतामित्यादि सर्व्वं पूर्व्ववत् । पुच्छे प्रतिग्रहस्तु विशेषः[4] ।

तत आचम्य यथाशक्ति दानानि दद्यात् । यथा

भूमिदीपान्नपानीयं वस्त्रं ताम्बूलमासनम् ।

गन्धः पुष्पं फलं छत्रं पादुका स्वर्णरौप्यकम् ॥

---

१ क पुस्तके, सर्व्वभोगादिकम् ।

२ ख पुस्तके, देवब्राह्मणञ्च । ग पुस्तके, सम्प्रदानञ्च ।

३ ख पुस्तके, कृष्णां गवीं ।

४ ग पुस्तके, प्रतिग्रहस्तु पुच्छे ग्राह्यः ।

शय्या धेनुस्तथैतानि क्रमाद्दानानि षोडश।

अत्र केचित्—रामायणे श्राद्धानन्तरम्।

ततस्तोद्दिश्य पितरं ब्राह्मणेभ्यो धनं ददौ।

महार्हाणि च रत्नानि गाश्च वाहनमेव च॥

यानानि दासीर्दासांश्च वेश्मानि सुमहान्ति च।

भूषणानि च मुख्यानि राज्ञस्तयोर्द्ध्वदैहिके॥

इत्यभिधानादेकोद्दिष्टश्राद्धात् परं कुर्व्वन्ति।

वस्तुतस्तु श्राद्धस्य मध्याह्ने विधानात् दानस्य च पूर्व्वाह्णकर्त्तव्यत्वात् रामायणवचनस्य संप्रदानसमर्पणतयैव चरितार्थत्वात् सकलशिष्टाचारदर्शनाच्च श्राद्धात् पूर्व्वमेवेति प्रतीमः।

## तत्र भूमिदानम्।

याज्ञवल्क्यः—

भूदीपाश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान्।

नैवेशिकस्वर्णधूर्य्यान् दत्वा स्वर्गे महीयते॥

प्रतिश्रयो गृहाद्याश्रयः। नैवेशिकः विवाहोचितद्रव्यम्। धूर्य्या बलीवर्हादयः। भूमिं विष्णुं ब्राह्मणञ्चाभ्यर्च्य पूर्व्ववत् द्विजकरे जलं दत्वा द्रव्यञ्च संप्रोक्ष्य नारदीयवचनं कृताञ्जलिः पठेत्—

ॐ पृथिवी वैष्णवी पुण्या पृथिवी विष्णुपालिता।

पृथिव्यास्तु प्रदानेन प्रीयतां मे जनार्द्दनः॥

तिलकुशजलान्यादाय ॐ अद्येत्यादि स्वर्गलोकमहितत्वकाम इमां भूमिं गन्धाद्यर्च्चितां विष्णुदैवतामित्यादि पूर्व्ववत्। प्रतिग्रहस्तु प्रदक्षिणीकृत्येति विशेषः।

सुवर्णदानं गोदानं भूमिदानञ्च वासव ।
एतत् प्रयच्छमानस्तु सर्व्वपापैः प्रमुच्यते ॥

इति वृहस्पतिवचनात् सर्व्वपापविमुक्तिकाम इति वा ।

वृहन्नारदीये—

वृत्तिहीनस्य विप्रस्य दरिद्रस्य कुटुम्बिनः ।
स्वल्पामपि महीं दत्वा विष्णोः सायुज्यमाप्नुयात् ॥

ॐ अद्येत्यादि विष्णुसायुज्यकाम इमां भूमिं गन्धाद्यर्च्चितां विष्णुदैवतां वृत्तिहीनाय दरिद्राय कुटुम्बिनेऽमुकनाम्ने ब्राह्मणाय तुभ्यमहं संप्रददे ॥

आदिपुराणे,—

यस्तु गोचर्म्ममात्रां वै प्रयच्छति वसुन्धराम् ।
विमुक्तः सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥

गोचर्म्मप्रमाणमाह वृहस्पतिः,—

दशहस्तेन दण्डेन त्रिंशद्दण्डान्निवर्त्तनम् ।
पार्श्वतो दशदण्डेन गोचर्म्म परिचक्षते ॥

ॐ अद्येत्यादि सर्व्वपापविमुक्तिपूर्व्वक-विष्णुलोकगमनकाम इमां गोचर्म्मपरिमितां भूमिमित्यादि ।

वृहस्पतिः,—

फालकृष्टां महीं दत्वा सबीजां शस्यशालिनीम् ।
यावत् सूर्य्यकृतो लोकस्तावत् स्वर्गे महीयते ॥

अद्य सूर्य्यलोकस्थितावच्छिन्न स्वर्गमहितत्वकाम इमां सशस्यां भूमिमित्यादि ।

बृहस्पतिः,—

सर्व्वेषामेव दानानामेकजन्मानुगं फलम्।
हाटकक्षितिगौरीणां[1] सप्तजन्मानुगं फलम्॥
हर्त्ता हारयते भूमिं मन्दबुद्धिस्तु यो नरः।
स बद्धो वारुणैः पाशैस्तिर्य्यग्योनिषु जायते॥
स्वदत्तां परदत्तां वा यो हरेद्वै[2] वसुन्धराम्।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते॥
गामेकां स्वर्णमेकञ्च भूमेरप्यर्द्धमङ्गुलम्।
हरन्नरकमाप्नोति यावदाहूतसंप्लवम्॥
कृतं दत्तं तपोऽधीतं यत्किञ्चित् कर्म्म सञ्चितम्।
अर्द्धाङ्गुष्ठेन सीमाया हरणेन प्रणश्यति॥

## अथ दीपदानम्।

घृतेन तैलेन वा दीपो दातव्यः।

महाभारते,—

हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः।
वसामेदोऽस्थिनिर्य्यासैर्न कार्य्यः पुष्टिमिच्छता॥

शङ्खः,—

दशां विवर्ज्जयेत् प्राज्ञो यद्यप्याहतवस्त्रजाम्।

कालिकापुराणे,—

[3]शाणवादरजातन्तु जीर्णं मलिनमेव वा।

१ ग पुस्तके,—गौणानाम्। २ ख, हरेत।
३ ख, ग पुस्तकद्वये, शाणं वादरजं वस्त्रम्।

उपयुक्तन्तु नादद्याद्वर्त्तिकार्थं कदाचन ॥

कार्पासं वादरञ्च तदित्यमरकोषदर्शनात् कार्पासिकवस्त्रं वादरं तत्र जातं तद्भवं दशामित्यर्थः । उपयुक्तं पूर्व्वकृतोपयोगम् ।

तथा—तैजसं दारवं लौहं मार्त्तिकं नारिकेलजम् ।
तृणराजोद्भवं वापि दीपपात्रं प्रशस्यते ॥

तृणराजोद्भवं तालफलास्थिमयम् ।

तथा—दीपवृक्षाश्च कर्त्तव्यास्तैजसाद्यैः प्रयत्नतः ।
वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ॥
न मिश्रीकृत्य दद्यात्तु दीपस्नेहान् घृतादिकान् ।
कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥

शिवपुराणे,—
दीपदानन्तु यो दद्याद्दैवते ब्राह्मणेषु वा ।
तेन दीपप्रदानेन अक्षयां गतिमाप्नुयात् ॥

दीपं विष्णुं ब्राह्मणञ्चाभ्यर्च्च्य पूर्व्ववत् द्विजकरे जलं दत्वा द्रव्यञ्च प्रोक्ष्य ॐ अद्येत्यादि अक्षयगतिकाम इमं घृतप्रदीपं तैलप्रदीपं वा गन्धाद्यर्च्चितं सवस्त्रं विष्णुदैवतमित्यादि दक्षिणाद्रव्यस्पर्शान्तम् । पूर्व्ववत् स्पृष्ट्वा प्रतिग्रहः ॥

महाभारते,—
तमोऽन्धकारनिरयं दीपदो न प्रपश्यति ।
प्रभास्वास्य प्रयच्छन्ति सोमभास्करपावकाः ॥
देवताश्चानुमन्यन्ते विमलाः सर्व्वतो दिशः ।
द्योतते च यथादित्यः प्रेतलोकगतो नरः ॥

ॐ अद्येत्यादि तमोऽन्धकारनिरयादर्शन-सोमभास्करपावकदत्त-प्रभालाभ-देवताकर्त्तृकसर्व्वतोविमलदिगनुमति-प्रेतलोकाधिकरणादित्यवत्द्योतनकाम इति वा। पूर्व्वलिखितयाज्ञवल्क्यवचनात् स्वर्गलोकमहितत्वकामो वा।

दीपदश्चक्षुरुत्तममिति मनुवचनात् उत्तमचक्षुःप्राप्तिकामो वा।

महाभारते,—

दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत्॥

## अथान्नदानम्।

ब्रह्मपुराणे,—

अन्नस्य च प्रदानेन नरो याति पराङ्गतिम्।
सर्व्वकामसमायुक्तः प्रेत्य चाप्यश्नुते शुभम्॥

पूजादि विधाय ॐ अद्येत्यादि परमगतिप्राप्ति-सर्व्वकामसमन्वितत्व-परलोकशुभावाप्तिकाम इदमन्नं कांस्यादिपात्राधार[1] सहितं घृताद्युपकरणसमन्वितं सवस्त्रं प्रजापतिदैवतमित्यादि दक्षिणाद्रव्यसर्गान्तं पूर्व्ववत्। करमध्येन स्पृष्ट्वा प्रतिग्रहः।

मनुः,—

सुखमक्षय्यमन्नदः।

पूजादि विधाय ॐ अद्येत्यादि, अक्षय्यसुखप्राप्तिकाम इति वा। पूर्व्वलिखितयाज्ञवल्क्यवचनात्-स्वर्गलोकमहितत्वकामो वा।

संवर्त्तः,—

अन्नदस्तु भवेच्छ्रीमान् सुरूपः कीर्त्तिमांस्तथा।

---

१ ग पुस्तके, तैजसाधार-।

ॐ अद्येत्यादि श्रीमत्त्व-सुदृष्टत्व-कीर्त्तिमत्त्व-काम इति वा ।

भारते,—

अन्नदः पशुमान् पुत्री धनवान् भोगवानपि ।
प्राणवांश्चापि भवति रूपवांश्च तथा नृप ॥

ॐ अद्येत्यादि पशुमत्त्व-पुत्रित्व-धनवत्त्व-भोगवत्त्व-प्राणवत्त्व-रूपवत्त्वकामो वा ।

अग्निपुराणे सुसंस्कृतान्नदाने—

सुसंस्कृतं तु यो दद्यादन्नं श्रद्धासमन्वितः ।
इन्द्रलोके वसेत् सोऽपि यावदिन्द्राश्चतुर्द्दश ॥

पूजादि विधाय ॐ अद्येत्यादि चतुर्द्दशेन्द्रकालावच्छिन्नेन्द्रलोकवासकाम इदं सुसंस्कृतान्नं प्रजापतिदैवतमित्यादि दक्षिणाद्रव्यस्यार्पान्तम् ।

महाभारते,—

यथाशक्ति च यो दद्यादन्नं विप्रेषु संस्कृतम् ।
स तेन कर्म्मणाप्नोति प्रजापतिसलोकताम् ॥

पूजादि विधाय ॐ अद्येत्यादि प्रजापतिसालोक्यकाम इदं सुसंस्कृतान्नं प्रजापतिदैवतमित्यादि दक्षिणाद्रव्यस्यार्पान्तम् ॥

## अथ जलदानम् ।

ब्रह्मपुराणे,—

जलपात्रप्रदातारः कुटिकाकनकप्रदाः ।
पूज्यमानाऽप्सरोभिश्च यान्ति दृप्ता महागजैः ॥

पूजादि विधाय ॐ अद्येत्यादि अनेकाप्सरःपूज्यमानत्व-महा-

गजकरणकस्वर्गप्रयाणकाम इदं जलपूर्णतैजसपात्रं सवस्त्रं गन्धाद्यर्चितं वरुणदैवतमित्यादि दक्षिणाजलपात्रस्पर्शान्तम् ॥

स्कन्दपुराणे,—

अपां पूर्णं तु यो भाण्डं ब्राह्मणाय प्रयच्छति।
रसास्तस्योपतिष्ठन्ति[१] पूज्यते च वियद्गतः ॥

ॐ अद्येत्यादि वङ्करसोपस्थिति[२]-वियदधिकरणकपूज्यत्वकाम इति वा ॥

केवलजलदाने तु याज्ञवल्क्यवचनात् स्वर्गलोकमहितत्वकाम इति वा।

स्कन्दपुराणे। सुगन्धिशीतलजलदाने,—

सुगन्धाः शीतलाश्चापो रसैर्दिव्यैः समन्विताः।
यः प्रयच्छति विप्रेभ्यस्तस्य पुण्यफलं शृणु ॥
विमानं सूर्य्यसङ्काशमप्सरोगणसेवितम्।
सोऽधिरुह्य दिवं याति वरुणस्य सलोकताम् ॥
तत्र वर्षायुतान्यष्टावुषित्वा देववत् सुखी।
कुले महत्यसङ्कीर्णे जायते धनधान्यवान् ॥

पूजादि विधाय ॐ अद्येत्यादि अप्सरोगणसेवित सूर्य्यसङ्काश विमानारोहणपूर्व्वक-स्वर्गलोकगमन-वरुणसालोक्यप्राप्ति-तल्लोकाधिकरणकाष्टायुतवर्षदेववत्सुखिलवास—तदुत्तरासङ्कीर्णमहाकुलजन्म—धनधान्यवत्वकाम एताः सुगन्धाः शीतला दिव्यरससमन्विताः

---

१ ग पुस्तके, वसवस्योपतिष्ठन्ते।

२ ग पुस्तके, वसूपस्थिति—।

आपो वरुणदैवता यथानामगोत्रेभ्यो ब्राह्मणेभ्यो इत्यादि दक्षिणा जलस्पर्शान्तम्। एताश्च फलभूयस्त्वात् विप्रेभ्य इति बहुवचनाच बहुकलसस्था ज्ञेयाः।

[1]नन्दिपुराणे तृषार्त्तजलदाने,—

यो ऽपि कश्चित्तृषार्त्ताय जलदानं प्रयच्छति।
स नित्यतृप्तो वसति स्वर्गे युगशतं नृप॥

ॐ अद्येत्यादि नित्यतृप्तत्व-युगशतावच्छिन्नस्वर्गवासकाम इदं जलं वरुणदैवतमित्यादि।

## अथ वस्त्रदानम्।

स्कान्दे—

यस्तु वस्त्रं प्रयच्छेत ब्राह्मणाय महाशयाः।
स लोकं प्राप्य वैराजं वर्षकोटीः सुखं वसेत्॥

पूजादि विधाय ॐ अद्येत्यादि वैराजलोकप्राप्तिपूर्व्वक बहु-वर्षकोट्यवच्छिन्नसुखवासकाम इदं वस्त्रं बृहस्पतिदैवतमित्यादि दक्षिणाद्रव्यस्पर्शान्तं पूर्व्ववत्। दशाग्रहणपरिधानान्तः प्रतिग्रहः।

दत्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते।

इति विष्णुधर्म्मवचनात् लिखितयावच्छब्दवचनाच्च स्वर्गलोक-महितत्वकामो वा।

वासोदश्चन्द्रसालोक्यम्।

इति मनुवचनात् चन्द्रसालोक्यप्राप्तिकामो वा।

वस्त्रदश्च सुवेशः स्यात्।

---

१ ख पुस्तके, नन्दिकेश्वरपुराणे।

इति सम्वर्त्तवचनात् सुवेशलभवनकामो वा ॥

## अथ ताम्बूलदानम्।

सम्वर्त्तः,—

ताम्बूलञ्चैव यो दद्याद्ब्राह्मणेभ्यो विचक्षणः।
मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥

पूजादि विधाय ॐ अद्येत्यादि मेधावित्व-सुभगत्व-प्राज्ञत्व-दर्शनीयत्वकाम इदं ताम्बूलमर्च्चितं रैत्यादिपात्राधारसहितं सवस्त्रं वत्सराजदैवतं इत्यादि ताम्बूलस्पर्शान्तम्। प्रतिग्रहस्तु करमध्येन स्पृष्ट्वा[1]।

विष्णुधर्म्मे,—

ताम्बूलस्य प्रदानेन सौभाग्यमपि विन्दति ॥

अद्य सौभाग्यप्राप्तिकाम इति वा।

## अथासनदानम्।

सम्वर्त्तः,—

पादुकोपानहं छत्रं शयनान्यासनानि च।
विविधानि च यानानि दत्त्वा प्राज्ञः सुखी भवेत् ॥

पूजादि विधाय ॐ अद्येत्यादि प्राज्ञत्व-सुखित्वभवनकाम इदमासनं सवस्त्रमर्च्चितमुत्तानाङ्गिरोदैवतमित्यादि दक्षिणान्तम्। उपविश्य प्रतिग्रहः।

विष्णुधर्म्मोत्तरे,—

नरस्त्वासनदानेन स्थानं सर्व्वत्र विन्दति।

ॐ अद्येत्यादि अभिलषितस्थानलाभकाम इति वा।

---

१ ग पुस्तके, इति विशेषः, इत्यधिकः पाठः।

ब्रह्मपुराणे,—

आसनं यः प्रयच्छेत संवीतं ब्राह्मणाय वै ।
राज्यस्थानमवाप्नोति स्वर्गं प्राप्नोति विज्वरः ॥

संवीतं वस्त्राच्छादितम् । अद्य राज्यस्थानावाप्ति-स्वर्गप्राप्तिकाम इति वा ॥

## अथ गन्धदानम् ।

नारदीये,—

गन्धदः पुण्यफलदः[1] प्रयाति ब्रह्मणः पदम् ।

पूजादि विधाय ॐ अद्येत्यादि ब्रह्मपदप्रयाणकाम इमं गन्धं रैत्यादिपात्राधारसमेतं सवस्त्रमर्च्चितं गन्धर्व्वदैवतमित्यादि दक्षिणा-द्रव्यस्पर्शान्तं । करमध्येन प्रतिग्रहः ।

विष्णुधर्म्मोत्तरे,—

नरश्चन्दनदानेन सर्व्वपापैः प्रमुच्यते ।

ॐ अद्येत्यादि सर्व्वपापविमुक्तिकाम इमं चन्दनगन्धं[2]मित्यादि वा । याज्ञवल्क्यवचनात् ॐ अद्य अत्यन्तसुखित्वभवनकाम इद-मनुलेपनमित्यादि वा ।

## अथ पुष्पदानम् ।

याज्ञवल्क्यः,—

गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं स्त्रियं[3] शय्यां दत्वाऽत्यन्तं सुखी भवेत् ॥

---

१ ग पुस्तके, पुण्यफलभाक् ।
२ ख पुस्तके, गन्धर्व्वदैवतमित्यधिकः पाठः ।
३ ग पुस्तके, यानं वार्त्ताश्रयाम् ।

पूजादि विधाय ॐ अद्येत्यादि अत्यन्तसुखिलर्भवनकाम इदं माल्यं सवस्त्रमर्च्चितं दैत्यादिपात्राधारसहितं वनस्पतिदैवतमित्यादि दक्षिणा करमध्येन स्पर्शान्तम् ।

ब्राह्मे,— ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तविमानैस्ते यान्ति धर्म्मपुरं नराः ॥

ॐ अद्येत्यादि हंसयुक्तविमानकरणकधर्म्मपुरगमनकाम इदं पुष्पमर्च्चितं साधारं वनस्पतिदैवतमित्यादि ।

## अथ फलदानम् ।

सम्वर्त्तः,—फलमूलानि पानानि शाकानि विविधानि च ।
यानानि दत्वा विप्रेभ्यो मुदा युक्तः सदा भवेत् ॥

पूजादि विधाय ॐ अद्येत्यादि सर्व्वदा हर्षान्वितत्व[१]भवनकाम एतानि फलानि सवस्त्राणि साधाराणि वनस्पतिदैवतानीत्यादि दक्षिणा द्रव्यस्पर्शान्तम् । प्रतिग्रहस्तु करमध्येन ।

पूर्व्वलिखितब्रह्मपुराणवचनात्— ॐ अद्य हंसयुक्तविमानकरणकधर्म्मपुरगमनकाम एतानि फलानीत्यादि वा ।

अत्र बहुवचनात् बहुफलानि देयानि ।

विष्णुधर्म्मे,—
फलं मनोहरं दत्वा अग्निष्टोमफलं लभेत् ।

अद्य अग्निष्टोमयज्ञफलसमफलप्राप्तिकाम इदं मनोहरं फलं वनस्पतिदैवतमित्यादि दक्षिणाद्रव्यस्पर्शान्तम् ।

---

१ ख पुस्तके, मुद्युक्तत्व— ।

## अथ छत्रदानम्।

सम्वर्त्तः,—

पादुकोपानहं छत्रं शयनान्यासनानि च।
विविधानि च पानानि दत्वा प्राज्ञः सुखी भवेत्॥

पूजादि विधाय ॐ अद्येत्यादि प्राज्ञत्व-सुखित्व भवनकाम इदं छत्रं सवस्त्रमर्च्चितं उत्तानाङ्गिरोदैवतमित्यादि दक्षिणाद्रव्यस्यशान्तम्। प्रतिग्रहस्तु दण्डे धृत्वा। याज्ञवल्क्योक्तात्यन्तसुखित्वभवनकामो वा।

ब्रह्मपुराणे,—

उपानद्युगलं छत्रं शय्यासनमथापि वा।
ये प्रयच्छन्ति वस्त्राणि तथैवाभरणानि च॥
ते यान्त्यश्वै रथैश्चैव कुञ्जरैश्चाप्यलङ्कृताः।
धर्म्मराजपुरं दिव्यं छत्रैः सौवर्णराजतैः॥

[1][ॐ अद्येत्यादि बह्वश्व-बहुरथ-बहुकुञ्जरकरणकदिव्यधर्म्मराज-पुरगमनकाम इति वा।

## अथ पादुकादानम्।

महाभारते—

ब्राह्मणाय सुशीलाय यो दद्यात् काष्ठपादुके।
स वाहनेन दिव्येन] दिवं गच्छति भोगवान्॥

पूजादि विधाय ॐ अद्येत्यादि दिव्यवाहनकरणकभोगवद्दात्रीयस्वर्गगमनकाम इमे काष्ठपादुके सवस्त्रे गन्धाद्यर्च्चिते उत्तानाङ्गिरोदैवते इत्यादि दक्षिणाद्रव्यग्रहणान्तम्। प्रतिग्रहस्तु तत्रारुह्य।

---

१ क पुस्तके, [ ] चिह्नितांशो नास्ति।

याज्ञवल्क्यवचनादत्यन्तसुखिलभवनकाम इदमुपानद्युगलं सवस्त्र-मर्च्चितमुत्तानाङ्गिरोदैवतमित्यादि वा। सम्वर्त्तोक्तप्राञ्जल-सुखिल भवनकामो वा।

[1][उपानच्छत्रयोर्दाता स्वर्गं याति च शोभनम्।

इति नरसिंहपुराणवचनात् शोभनस्वर्गप्राप्तिकाम इति वा॥]

## अथ काञ्चनदानम्।

नारदीये,—

हेमदो विष्णुभवनं प्रयाति कुलसंयुतः।

पूजादि विधाय ॐ अद्येत्यादि कुलसहित विष्णुभवनप्रयाणकाम इदं काञ्चनमर्च्चितं सवस्त्रमग्निदैवतमित्यादि दक्षिणा द्रव्यग्रहणान्तम्।

दक्षिणा चात्र रजतमेव। प्रतिग्रहस्तु कौरमध्येन।

नैवेशिकस्वर्णधूर्य्यान् दत्वा स्वर्गे महीयते।

इति याज्ञवल्क्यवचनादद्य स्वर्गलोकमहितत्वकामो वा।

विष्णुधर्म्मे,—

सुवर्णदानं गोदानं पृथिवीदानमेव च।

एतत्प्रयच्छमानो वै सर्व्वपापैः प्रमुच्यते॥

अद्य सर्व्वपापविमुक्तिकाम इति वा।

सम्वर्त्तः—

हिरण्यदः समृद्धिञ्च तेजश्चायुश्च विन्दति।

अद्य समृद्धितेजश्चायुर्लाभकाम इति वा।

१ ग पुस्तके, [ ] चिह्नितांशो नास्ति।

दानधर्म्मे—सर्व्वान् कामानवाप्नोति काञ्चनं यः प्रयच्छति ।

अद्य सर्व्वकामावाप्तिकामो वा ।

परिमितसुवर्णदाने स्कन्दपुराणे,—

सुवर्णं यः प्रयच्छेत[1] दरिद्राय द्विजातये ।

दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥

अद्य दशाश्वमेधफलसमफलप्राप्तिकाम इदं सुवर्णं सवस्त्रमर्च्चितमग्निदैवतमित्यादि ।

## अथ रजतदानम् ।

ब्राह्मे— सुवर्णं रजतं वापि विद्रुमं मौक्तिकं तथा ।

ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः[2] ॥

[3][पूजादि विधाय ॐ अद्येत्यादि कनकोज्ज्वलविमानकरणक प्रयाणकाम इदं रजतं पितृदैवतं सवस्त्रमर्च्चितमित्यादि दक्षिणा-द्रव्यसम्प्रदानान्तम् प्रतिग्रहस्तु करमध्येन ।

रूप्यदो रूपमुत्तमम् ।

इति मनुवचनात्] अद्य उत्तमरूपप्राप्तिकामो वा ।

## अथ शय्यादानम् ।

याज्ञवल्क्यः,—

यानं [4]वृक्षं स्त्रियं शय्यां दत्वात्यन्तं सुखी भवेत् ।

---

१ ग पुस्तके, प्रयच्छेत्तु ।

२ ग पुस्तके, ये प्रयच्छन्ति विमलं ते यान्ति रूपमुत्तमम् ।

३ ग पुस्तके, [ ] चिह्नितांशो नास्ति ।

४ ग पुस्तके, वृक्षाश्रयाम् ।

पूजादि विधाय ॐ अद्येत्यादि अत्यन्तसुखितभवनकाम इमां शय्यामर्च्चितां सोपकरणामुत्तानाङ्गिरोदैवतामित्यादि दक्षिणाद्रव्यग्रहणान्तम्। प्रतिग्रहस्त्वारुह्य सुप्त्वा।

शाम्बपुराणे,—

शय्याप्रदानं यो दद्याद् ब्राह्मणेषु विशेषतः।
षष्टिवर्षसहस्राणि स्वर्गलोके महीयते॥
पश्चात् कालत्रयं प्राप्य जायते विपुले कुले।

अद्येत्यादि षष्टिवर्षसहस्रावच्छिन्नस्वर्गलोकमहितत्व तदुत्तरविपुलकुलजन्मकामो वा।

पूर्व्वलिखितब्रह्मपुराणवचनात् अद्य वङ्कस्य-वङ्करथ-वङ्ककुञ्जरकरणकं दिव्यधर्म्मराजपुरगमनकाम्मो वा।

## अथ गोदानम्।

याज्ञवल्क्यः,—

हेमशृङ्गी शफै रौप्यैः सुशीला वस्त्रसंयुता।
कांस्योपदोहा दातव्या क्षीरिणी गौः सदक्षिणा॥
दाताऽस्याः स्वर्गमाप्नोति वत्सरान् लोमसम्मितान्।
कपिला चेत्तारयति [1]भूयश्चासप्तमं कुलम्॥
[2]सवत्सारोमतुल्यानि युगान्युभयतोमुखीम्।
दाता स्वर्गमवाप्नोति पूर्व्वेण विधिना ददत्॥
यावद्वत्सस्य पादौ द्वौ मुखं योनौ प्रदृश्यते।
तावद्गौः पृथिवीतुल्या यावद्गर्भं न मुञ्चति॥

१ ग पुस्तके, दातुः। २ ग पुस्तके, वत्सरान्।

सवत्सां गां स्वर्णशृङ्गाद्यलङ्कृतां कृत्वा पाद्यादिभिः संपूज्य धेन्वङ्गा-धिष्ठातृदेवताभ्यो नम इति पुष्पाञ्जलिनाऽभ्यर्च्य कृताञ्जलिः पठेत्।

ॐ या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु॥
देहस्था या च रुद्राणी शङ्करस्य च या प्रिया।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः।
चन्द्रार्कशक्रशक्ति र्या धेनुरूपाऽस्तु सा श्रिये॥
चतुर्मुखस्य या लक्ष्मी र्या लक्ष्मीर्धनदस्य च।
या लक्ष्मीः सर्व्वभूतानां सा धेनुर्वरदाऽस्तु मे॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः।
सर्व्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे॥
सर्व्वलोकमयीं दोग्ध्रीं सर्व्वदेवमयीं[१] तथा।
सर्व्वलोकहितार्थाय सर्व्वलोकभवाय च॥
प्रयच्छामि महाभागामक्षयाय शुभामिमाम्॥

ततो रुद्रदेवतां संप्रदानब्राह्मणमपि पाद्यादिभिः संपूज्य इमां धेनुं ददानीति ब्राह्मणहस्ते जलं दत्वा ददस्वेति तेनोक्ते जलेन धेनुं प्रोक्ष्य वस्त्रेणाच्छाद्य वामहस्तेन पुच्छं धृत्वा-ॐ अद्येत्यादि एतद्धेनुलोमसम्मितवत्सरावच्छिन्नस्वर्गवासकाम इमां धेनुं सौवर्ण-शृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्योपदोहामादर्शललाटां घण्टाग्रीवां चामरपुच्छां गन्धाद्यर्च्चितां पयस्विनीं वासोयुगाच्छादितां रुद्र-

१ ग पुस्तके,—वेदमयीम्।

दैवतां अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। ग्रहीता पुच्छे गृहीत्वा स्वस्तीति वदेत्।

ॐ[1] अद्येत्यादि एतद्धेनुलोमसम्मितवत्सरावच्छिन्नस्वर्गवास-कामनया कृतैतद्धेनुदानप्रतिष्ठार्थं दक्षिणामिदं काञ्चनमग्नि-दैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। ततो ग्रहीता स्वस्तीत्युक्त्वा काञ्चनं स्पृष्ट्वा गायत्रीं कामस्तुतिञ्च पठित्वा धेनुरियं रुद्रदेवताकेति वदेत्॥ ततो घासग्रासदानम्।

सुरभे त्वं जगन्मातर्देवानाममृतप्रदे।
गृहाण वरदे ग्रासमीप्सितार्थं प्रदेहि[2] मे॥

कपिलाधेनुदाने तु पूर्व्ववत् पूजादि विधाय—

ॐ अद्येत्यादि एतत्कपिलधेनुलोमसम्मितवत्सरावच्छिन्न-स्वर्गवाससप्तमकुलतारणकाम इमां कपिलधेनुं पयस्विनीं सौवर्ण-शृङ्गीमित्यादि दक्षिणापुच्छस्पर्शघासग्रासदानान्तं पूर्व्ववत्॥

शिवपुराणे,—

यः कुर्य्यात् कपिलादानं ब्राह्मणेषु विशेषतः।
यावन्ति रोमकूपानि तस्या गात्रेषु वै द्विज॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते।
अथ कालक्षयं प्राप्य जायते विपुले कुले॥

तस्या इत्येकवचनाद्ब्राह्मणेष्विति जातावेकस्मिन् बहुवचनम्।

ॐ अद्येत्यादि एतत्कपिलधेनुलोमकूपसमसङ्ख्यवर्षसहस्रा-

---

१ ग पुस्तके, ॐ इत्यादि दक्षिणावाक्यं नास्ति। २ ग प्रयच्छ।

वच्छिन्नस्वर्गलोकमहितत्व-तदुत्तरविपुलकुलजन्मकाम इमां कपिल-धेनुं सौवर्णशृङ्गीमित्यादि वा।

उभयमुखीदानस्य तु याज्ञवल्क्येन-सवत्सायास्तस्या रोमतुल्यानि युगानि स्वर्गमाप्नोत्यनन्तरं तावद्गौः पृथिवीतुल्येत्यभिधाय समस्त-पृथिवीदानतुल्यफलत्वमुक्तम्।

मत्स्यपुराणेऽपि,—

प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुताम्।
ससमुद्रगुहा तेन सशैलवनकानना॥
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः।
यावन्ति धेनुलोमानि वत्सस्य च नराधिप।
तावत्सङ्ख्यं युगगणं देवलोके महीयते॥

ॐ अद्येत्यादि एतदुभयमुखीसंज्ञक-सवत्सगवीलोमतुल्य युगा-वच्छिन्नस्वर्गवास-समस्तपृथिवीदानफलसमफल-प्राप्तिकाम इमामुभय-मुखीसंज्ञिकां गां सौवर्णशृङ्गीमित्यादि दक्षिणा पुच्छस्पर्शान्तं सर्व्वं पूर्व्ववत्।

गोमात्रदाने याज्ञवल्क्यः,—

यथा कथञ्चिद्दत्वा गां धेनुं वाऽधेनुमेव वा।
अरोगामपरिक्लिष्टां दत्वा स्वर्गे महीयते॥

यथा कथञ्चित् स्वर्णशृङ्गादिरहितामपीत्यर्थः।

पूजादि विधाय,—

ॐ अद्येत्यादि स्वर्गलोकमहितत्वकाम इमामरोगामपरिक्लिष्टां सवत्सामर्च्चितां रुद्रदैवतामित्यादि दक्षिणापुच्छग्रहणान्तम्।

गोदो ब्रध्नस्य पिष्टपमिति मनुवचनात् सूर्य्यलोकप्राप्तिकाम इति वा।

वृहन्नारदीये,—

ब्राह्मणाय ब्रह्मविदे यो दद्याद्गां पयस्विनीम्।
स याति विष्णुभवनं पुनरावृत्तिवर्ज्जितम्॥

इत्यादि बहूनि वचनानि ग्रन्थगौरवादुपेक्षितानि।

## अथ वृषभदानम्।

अग्निपुराणे,—

दशधेनुसमोऽनड्वानेकश्चेव धुरन्धरः।
अलङ्कृत्य वृषं वस्त्रैः पुण्येऽह्नि समुपस्थिते॥
सुवर्णशृङ्गं राजेन्द्र खुरै रौप्यैरलङ्कृतम्।
सुपुच्छं पट्टवस्त्रेण ब्राह्मणायोपपादयेत्॥
धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्त्तेरधिष्ठान पाहि मां दुष्कृताद्भुवि॥
प्रीयतां धर्म्मराजो मे[1] [प्रणिपत्य विसर्ज्जयेत्।
सप्तजन्मकृतं पापं वाङ्मनःकायकर्म्मभिः॥
तत् सर्व्वं विलयं याति वृषदानान्न संशयः।
यानं वृषभसंयुक्तं] दीप्यमानं स्वतेजसा॥
गन्धर्व्वाप्सरसाकीर्णं गीतनृत्यसमाकुलम्॥
आरुह्य कामगं दिव्यं स्वर्लोकमधिगच्छति।

१ क पुस्तके, [ ] चिह्नितांशो नास्ति।

यावन्ति तस्य लोमानि गोवृषस्य महामते ।
स्वर्गं प्राप्नोति तावन्ति अत्रायातो[१] नृपो भवेत् ।

अलङ्कृतं वृषभं ब्राह्मणं रुद्रञ्च संपूज्य द्विजकरे पूर्व्ववज्जलदानम् ।

ॐ अद्येत्यादि वाङ्मनःकायकृतसप्तजन्मपापचय-वृषभसंयुक्तस्वतेजोदीप्यमान गन्धर्व्वाप्सरःसङ्कीर्ण-गीतनृत्यसमाकुल-कामगदिव्य-यानारोहणपूर्व्वकस्वर्लोकगमन-तदुत्तरेतद्वृषभलोमसमसंख्यवर्षावच्छिन्नस्वर्गस्थिति-तदुत्तरनृपभवन-काम इमं वृषभं वस्त्राद्यलङ्कृतं सुवर्णशृङ्गं रौप्यखुरं पट्टवस्त्रपुच्छमर्च्चितं रुद्रदैवतमित्यादि दक्षिणापुच्छस्पर्शान्तं पूर्व्ववत् ।

ततः कृताञ्जलिः—

ॐ धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्त्तेरधिष्ठान पाहि मां दुष्कृताद्भुवि ॥

प्रीयतां धर्म्मराजो मे प्रणिपत्य विसर्ज्जयेत् ।

वृषभमात्रदाने याज्ञवल्क्यः,—

नैवेशिकस्वर्णधूर्य्यान् दत्त्वा स्वर्गे महीयते ।

अद्य स्वर्गलोकमहितत्वकाम इत्यादि सर्व्वं पूर्व्ववत् ।

## अथ गुड़धेन्वादिदानम् ।

अग्निपुराणे,—

दशधेनूः प्रवक्ष्यामि या दत्त्वा भुक्तिमुक्तिभाक् ।
प्रथमा गुड़धेनुः स्याद्घृतधेनुस्तथा परा ॥

---

१ ग पुस्तके, अत्र जातः ।

तिलधेनुस्तृतीया च चतुर्थी जलधेनुका ।
क्षीरधेनुर्मधुधेनुः शर्कराद्धिधेनुके ॥
रसधेनुः स्वरूपेण दशमी विधिरुच्यते ।
कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः ॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ।
गोमयेनानुलिप्तायां दर्भानास्तीर्य्य सर्व्वतः ।
लघ्वेणकाजिनं तद्वत् वत्सस्य परिकल्पयेत् ॥
प्राङ्मुखीं कल्पयित्वा तु प्रदद्यात् गां सवत्सिकाम् ।
उत्तमा गुड़धेनुः स्यात् सदा भारचतुष्टयात् ॥
वत्सं भारेण कुर्व्वीत भाराभ्यां मध्यमा स्मृता ।
अर्द्धभारेण वत्सः स्यात् कनिष्ठा भारकेण तु ॥
चतुर्थांशेन वत्सः स्यात् गृहवित्तानुसारतः ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़श ॥
पलं सुवर्णाश्चत्वारस्तुला पलशतं स्मृतम् ।
स्याद्भारो विंशतितुला द्रोणस्तु चतुराढ़कः ॥
धेनुवत्सौ गुड़ास्यौ तौ सितसूक्ष्माम्बरावृतौ ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ ॥
सितसूत्रशिरालौ[१] च सितकम्बलकम्बलौ ।
ताम्रपट्टकपृष्ठौ[२] तौ सितचामररोमकौ ॥

---

१ ग, पुस्तके कुम्भान् । २ खं, पुस्तके शिरायद्धौ ।
३ ग पुस्तके एष्ठकएष्ठौ ।

विद्रुमभ्रुयुगावेतौ नवनीतस्तनान्वितौ ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥
सुवर्णशृङ्गाभरणौ राजतखुरसंयुतौ ।
घण्टाग्रीवौ पुष्पदन्तौ घ्राणौ गन्धकरण्डकौ[१] ॥
रचयित्वा यजेद्धेनुमिभिर्मन्त्रैर्द्विजोत्तमः ।
या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता ॥
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ।
देहस्था याच रुद्राणी शङ्करस्य सदाप्रिया ॥
धेनुरूपेण सा देवी मम पापं व्यपोहतु[२] ।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः ॥
चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ।
चतुर्मुखस्य या लक्ष्मी र्या लक्ष्मीर्धनदस्य च ॥
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे ।
[३]स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ॥
सर्व्वपापहरा धेनुः सर्व्वशान्तिं प्रयच्छतु ।
एवमामन्त्रितां धेनुं ब्राह्मणाय निवेदयेत् ॥
समानं सर्व्वधेनूनां विधानं चैतदेव हि ।
सर्व्वयज्ञफलं प्राप्य निर्मलो भुक्तिमुक्तिभाक् ॥
स्वर्णशृङ्गी[४] शफै रौप्यैः सुशीला वस्त्रसंयुता ।

---

१ क ग पुस्तकद्वये; गन्धशाणप्रकल्पितौ । २ ख पुस्तके, पङ्क्तिर्नास्ति ।
३ ख पुस्तके स्वधा या । ४ ग पुस्तके, स्वर्णशृङ्गैः ।

कांस्योपदोहा दातव्या क्षीरिणी गौः सदक्षिणा ॥
दाताऽस्याः स्वर्गमाप्नोति वत्सरान् लोमसम्मितान् ॥

अस्यार्थः। या दश [1]धेनूर्दत्तेत्यर्थः। रसधेनुरिक्षुरसकल्पिता धेनुरित्यर्थः। स्वरूपेण तु दशमी सवत्सा गौरित्यर्थः। द्रव-द्रव्यधेनूनां घृतधेनु-जलधेनु-दुग्धधेनु[2]-मधुधेनु दधिधेनु-रसधेनूनां कुम्भाः स्युः तत्तद्द्रव्यपूरितैककुम्भः परिमाणमित्यर्थः। इतरासां गुड़तिलशर्कराधेनूनां राशिः परिमाणं स च राशिर्भारचतुष्टयेन गुड़शर्करयोस्तिलस्य तु द्रोणचतुष्टयेनेति वक्ष्यते।

प्रथमं गोमयेन भूमिमालिप्य तत्र दर्भानास्तीर्य्य तदुपरि चतु-र्हस्तं पूर्व्वाभिमुखं कृष्णाजिनं विन्यस्य तत्पार्श्वे स्वल्पं हरिणाजिनं प्राङ्मुखं वत्सत्वेन कल्पितं न्यसेत्।

तन्मध्ये भारचतुष्टयप्रमाणं गुड़ं स्थापयेत्।

वत्सस्य एको भारः। अयन्तु मुख्यः कल्पः।

भारद्वयेन धेनुः, तच्चतुर्थांशेन वत्सः। इति मध्यमः।

भारैकेन धेनुः, चतुर्थांशेन वत्सः। इति कनिष्ठः कल्पः।

वित्तानुसारेण कल्पनीयः। एतदर्थमेव भारप्रमाणमाह पञ्च-कृष्णलको माष इत्यादिना। इदमेव शर्कराधेनोरपि परिमाणं तिलधेनोस्तु तिलद्रोणचतुष्टयेन धेनु द्रोणैकेन वत्स इति परि-माणमेतदर्थमाह द्रोणस्तु चतुराढ़क इति।

---

[1] ग पुस्तके, रसधेनूः।

[2] ग पुस्तके, जलधेनु दुग्धधेनुपदं नास्ति।

तथाच [1]वायुपुराणे,—

प्रसृतिभिर्द्वादशभिः कुड़वस्तच्चतुर्गुणः।
प्रस्थः प्रस्थैश्चतुर्भिश्च आढ़कः परिकल्पितः॥
चतुराढ़को भवेद्द्रोणस्तिलधेनुश्चतुर्गुणः।

घृत-जल-दुग्ध-मधु-दधीक्षु-रस-धेनूनां तत्तद्द्रव्यपूरितकुम्भ एकः कृष्णाजिनमध्ये स्थाप्यस्तच्चतुर्थांशपरिमितो घटो वत्सलेन कल्पितो हरिताजिनमध्ये स्थाप्यः। ततश्च सितसूक्ष्मवस्त्रैर्धेनुवत्सावाच्छाद्य उभयो र्गुड़ेन मुखं कल्पयित्वा।

शुक्तिद्वयेन कर्णौ।

इक्षुखण्डचतुष्टयेन पादचतुष्टयं, मुक्ताद्वयेन नेत्रद्वयम्।

श्वेतसूत्रैः शिराः, शुक्लकम्बलेन गलकम्बलम्।

ताम्रपट्टेन पृष्ठं, श्वेतचामरैर्लोमानि।

विद्रुमखण्डाभ्यां भ्रुद्वयं, कांस्यपात्रस्थनवनीतेन स्तनम्।

पट्टवस्त्रेन पुच्छं, [2]कांस्यपट्टेन दोहम्।

इन्द्रनीलखण्डद्वयेन चक्षुषोस्तारकाद्वयं, सुवर्णशृङ्गद्वयेन शृङ्गद्वयम्।

रजतखुरचतुष्टयेन खुरचतुष्टयं, घण्टया भूषितां ग्रीवाम्।

पुष्पैर्दन्तान्, गन्धेन नासिकाम्।

रचयित्वा धेनुवत्सौ पुष्पमाल्यैर्भूषयित्वा पाद्यादिभिर्गुड़ादि-धेनुमभ्यर्च्य धेन्वङ्गाधिष्ठातृदेवताभ्यो नम इति पुष्पाञ्जलिनाभ्यर्च्य कृताञ्जलिः पठेत्।

---

१ ग पुस्तके, पद्मपुराणे। २ ख पुस्तके कांस्यपट्टकेन क्रोड़म्।

[1]या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।
चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये ॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ।
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ।
सर्व्वपापहरा धेनुः सर्व्वशान्तिं प्रयच्छतु ॥

इति पठित्वा रुद्रदेवतां सम्प्रदानब्राह्मणमपि पाद्यादिभिः सम्पूज्य इमां गुड़ादिधेनुं तुभ्यं ददामीति ब्राह्मणहस्ते जलं दत्वा ददस्वेति तेनोक्ते जलेन गुड़ादिधेनुं प्रोक्ष्य पद्मपुराणीयमन्त्रेणा-मन्त्रयेत् ।

अन्नं मे [2]जायतां सद्यः पायसञ्च रसास्तथा ।
कामान सम्पादयास्माकं गुड़धेनो[3] द्विजार्पिता ॥

अन्यत्र तु गुड़पदस्थाने घृतादिपदोहः कार्य्यः । ततो गृहीता पठति ।

गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थे विशेषतः ।
भरस्व कामैर्मां सर्व्वैर्गुड़धेनो नमोऽस्तु ते ॥

---

१ ग पुस्तके, या लक्ष्मीरित्यादि प्रयच्छत्वित्यन्त श्लोकपञ्चकं नास्ति ।
२ ग पुस्तके, धावताम् । ३ ग पुस्तके, गड़धेनुः ।

ततो वस्त्रेणाच्छाद्य पुच्छभागं धृत्वा ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्मा सर्व्वयज्ञफलसमफलप्राप्ति-सर्व्वपापविमुक्ति-भुक्ति-मुक्तिभागित्वकाम इमां गुड़धेनुं यथाविध्युपक्लृतां गन्धाद्यर्च्चितां वस्त्राच्छादितां रुद्रदैवतां चतुर्भागकल्पितवत्सां सुवर्णशृङ्गाद्यलङ्कृताममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।

ग्रहीता पुच्छे धृत्वा स्वस्तीति वदेत् ॥ ततः काञ्चनदक्षिणां दद्यात् ग्रहीता स्वस्तीति वदेत्। दक्षिणां गृहीत्वा गायत्रीं कामस्तुतिञ्च पठित्वा धेनुरियं रुद्रदैवतेति वदेत् ।

घृतधेन्वादीनामपि विधानं समानम् । फलमाह सर्व्वयज्ञेऽतिनिर्म्मलः सर्व्वपापरहितः स्यादित्यर्थः ।

पद्मपुराणीयवाक्यन्तु, बहुनरकमन्तरमैहिकानिष्टशान्ति-यावच्चन्द्रादित्यसमयक्षुत्पिपासाविवर्जितत्वाम्नोपभोगसाध्यपरमतृप्ति-स्वर्गलोकवसति-विविधकामावाप्ति-काम इत्यादि ।

एतच्च विस्तरभयान्न प्रपञ्चितम् । एवं गुड़धेन्वादीनां नवानां विधानमुक्त्वा, [1]स्वरूपधेनोर्विधिं तत्फलञ्चाह हेमशृङ्गी[2] शफै रौप्यैरित्यादि एतच्च पूर्व्वमेव लिखितमस्ति ।

## अथ तिलदानम् ।

विष्णुधर्म्मे,—

> लवणस्य प्रदातारस्तिलानां सर्पिषां तथा ।
> तेजस्विनोऽभिजायन्ते भोगिनश्चिरजीविनः ॥

---

१ ख पुस्तके, पयस्विधेनोः । २ ग पुस्तके, हेमशृङ्गैः ।

पूजादि विधाय ॐ अद्य तेजस्वित्व-भोगित्व-चिरंजीवित्वभवन-कामस्तिलानेतानित्यादि दक्षिणाद्रव्यस्यर्गान्तम्। घृतदाने लवणदानेऽप्येवम्। घृतदाने याज्ञवल्क्योक्तस्वर्गलोकमहितत्वकामो वा।

## अथ धान्यदानम्।

स्कन्दपुराणे,—

ओषधीर्यः प्रयच्छेत धान्यानि विविधानि च।
सर्व्वकामसमृद्धः सन् सोमलोकं स गच्छति॥
तत्र वर्षसहस्राणि सप्त स्थित्वा पुनर्नरः।
इह सर्व्वधनोपेतो भोगवानभिजायते॥

ओषधयो मुद्गाद्याः। पूजादिं विधाय अद्य सर्व्वकामसमृद्धिमदात्मीयसोमलोकगमन-तदधिकरणकसप्तवर्षसहस्रावस्थिति-तदुत्तर-मर्त्त्यलोकाधिकरणकसर्व्वधनोपेतभोगवज्जन्मकाम एतानि धान्यानि प्रजापतिदेवतानि इत्यादि दक्षिणास्यर्गान्तम्। याज्ञवल्क्योक्तात्यन्त-सुखित्वभवनकाम इति वा॥

## अथ शालग्रामशिलादानम्।

विष्णुधर्म्मोत्तरे,—

शालग्रामशिलाचक्रं यो दद्याद्दानमुत्तमम्।
भूचक्रं तेन दत्तं स्यात् सशैलवनकाननम्॥

शालग्रामे षोड़शोपचारेण विष्णुपूजां विधाय संप्रदानं विष्णुश्चाभ्यर्च्च्य-ॐ अद्येत्यादि सशैलवनकाननभूचक्रदानजन्यफलसमफल-प्राप्तिकाम इमां शालग्रामशिलामर्च्चितां विष्णुदैवतां साधारां सवस्त्रामित्यादि दक्षिणास्यर्गान्तम्।

## अथ दोलादानम् ।

विष्णुधर्म्मोत्तरे,—

नृवाह्यं पुरुषो यस्तु द्विजे सम्यक् प्रयच्छति ।
अश्वमेधफलं तस्य कथितं द्विजसत्तमाः ॥

नृवाह्यं दोलादि । पूजादि विधाय ॐ अद्येत्यादि अश्वमेधतुल्य फलप्राप्तिकाम इमां सोपकरणां दोलां विष्णुदैवतामित्यादि दक्षिणास्पर्शान्तम् । आरुह्य प्रतिग्रहः ।

[1]तत्रैव शिविकादाने,—

शिविकायाः प्रदानेन वह्निष्टोमफलं लभेत् ।

शिविका चतुर्दोलकम् । पूजादि विधाय ॐ अद्येत्यादि अग्निष्टोमफलसमफलप्राप्तिकाम इमामर्च्चितां शिविकां विष्णुदैवतामित्यादि दक्षिणास्पर्शान्तम् । आरुह्य प्रतिग्रहः ।

याज्ञवल्क्यः—

यानं वृक्षं स्त्रियं शय्यां दत्वात्यन्तं सुखी भवेत् ।

यानं दोलानौकादि । पूजादि विधाय ॐ अद्येत्यादि अत्यन्तसुखित्वभवनकाम इदं यानमर्च्चितं विष्णुदैवतमित्यादि दक्षिणायानस्पर्शारोहणान्तम् ।

यानशय्याप्रदो भार्य्यामिति मनुवचनात् भार्य्याप्राप्तिकाम इति वा ।

---

१ ख पुस्तके, शिविकादानप्रकरणं नास्ति ।

## अथ पुस्तकदानम्।

नन्दिपुराणे,—

अथ विद्याप्रदानन्तु सर्व्वदानोत्तमोत्तमम्॥
फलं दशाश्वमेधानां शतस्य सुकृतस्य च॥
राजसूयसहस्रस्य सम्यगिष्टस्य यत् फलम्।
तत् फलं लभते मर्त्त्यो विद्यादानेन भाग्यवान्॥
सर्व्वशस्यसुसम्पूर्णां सर्व्वरत्नोपशोभिताम्।
ब्राह्मणेभ्यो महीं दत्वा ग्रहणे चन्द्रसूर्य्ययोः।
यत् फलं लभते मर्त्यो विद्यादानेन तत् फलम्॥
यावदक्षरसंख्यानं विद्यते पत्रसंश्रये।
तावद्वर्षसहस्राणि स्वर्गे विद्याप्रदो वसेत्[1]॥
यावत्यः पङ्क्तयस्तत्र पुस्तकेऽक्षरसम्मिताः।
तावतो नरकात् कुल्यानुद्धृत्य नयते दिवम्॥
यावच्च पत्रसंख्यानं पुस्तके विद्यते शुभम्।
तावद्युगसहस्राणि सकुलो मोदते दिवि॥
यावच्च पातकं तेन कृतं जन्मशतैरपि।
तत् सर्व्वं नश्यते तस्य विद्यादानेन देहिनः॥
स जातो मानुषे लोके स धन्यः स च कीर्त्तिमान्।
यो विद्यादानसम्पर्कप्रसक्तः पुरुषोत्तमः॥
यथाविभवतो दत्वा विद्यां शाठ्यविवर्ज्जितः।

---

१ क ख पुस्तकद्वये, भवेत्।

याति पुण्यमयाल्लोकानक्षयान् भोगभूषितान् ॥

पूजादि विधाय ॐ अद्येत्यादि दशशताश्वमेधयज्ञफलसमफल-सम्यगिष्टराजसूयसहस्रफलसमफल-चन्द्रसूर्य्यग्रहणकालीनबहुब्राह्मण-संप्रदानकसर्व्वशस्यसुसंपूर्णसर्व्वरत्नोपशोभितमहीदानजन्यफलसमफल-प्राप्त्येतत्पुस्तकावस्थिताक्षरसमसंख्यवर्षसहस्रस्वर्गवासेतत्पुस्तकावस्थि-ताक्षरपङ्क्तिसमसंख्यस्वकुलनरकोद्धरणपूर्व्वकस्वर्गनयनैतत्पुस्तकावस्थि-तपत्रसमसंख्ययुगसहस्रावच्छिन्नकुलसहितात्मीयस्वर्गाधिकरणकहर्ष-बहुजन्मशतकृतयावत्पातकनाश-भोगभूषिताक्षयपुण्यमयलोकगमन-काम इदं पुस्तकं सवस्त्रमर्च्चितं सरस्वतीदैवतममुकगोत्रायेत्यादि दक्षिणा पुस्तकस्पर्शान्तं पूर्व्ववत् ।

हयशीर्षे—

यो दद्याल्लेखयित्वा तु पञ्चरात्रं द्विजोत्तमे ।
स विद्यादानपुण्येन वासुदेवे लयं व्रजेत् ॥
पुराणं लेखयित्वा तु यो दद्याद्ब्राह्मणे नरः ।
स विद्यादानपुण्येन वासुदेवे लयं व्रजेत् ॥
रामायणं भारतञ्च यो दद्याद्द्विजपुङ्गवे ।
स विद्यादानजं पुण्यं प्राप्य विष्णौ प्रलीयते[1] ॥
यो धर्म्मसंहितां दद्याल्लेखयित्वा द्विजोत्तमे ।
स विद्यादानजं पुण्यं समग्रं प्राप्नुयान्नरः ॥
वेदाङ्गान् लेखयित्वा तु यो दद्याद्ब्राह्मणर्षभे ।

---

१ ग पुस्तके, विलीयते ।

स स्वर्गलोकमाप्नोति यावदाभूतसंप्लवम् ॥

धर्म्मार्थकाममोक्षाणां या विद्या सिद्धये मता ।

तां लेख्य ब्राह्मणे दत्वा स्वर्गमाप्नोत्यसंशयम् ॥

[1]आकाशस्य यथा नान्तं सिद्धैरप्युपलक्ष्यते[2] ।

एवं विद्याप्रदानस्य नान्तं सर्व्वगुणात्मकम् ॥

अद्येत्यादि वासुदेवे जयकाम इदं पञ्चरात्रपुस्तकमित्यादि ।

अथ श्रीहरिवंशे तत्पुस्तकदाने,—

शताश्वमेधस्य यदत्र पुण्यं

चतुःसहस्रस्य शतक्रतोश्च ।

भवेदनन्तं हरिवंशदानात्

प्रकीर्त्तितं व्यासमहर्षिणा च ॥

यद्वाजपेयेन च राजसूया[3]

दृष्टं फलं हस्तिरथेन चान्यत् ।

तल्लभ्यते व्यासवचः प्रमाणं

गीतञ्च[4]वाल्मीकिमहर्षिणा च ॥

पूजादि विधाय ॐ अद्येत्यादि शताश्वमेधयज्ञफल-चतुःसहस्रशतक्रतुजन्यानन्तफल-वाजपेय राजसूययज्ञदृष्टफल-हस्तिरथदानजन्यफलसमफल-प्राप्तिकाम इदं हरिवंशपुस्तकं सवस्त्र-मर्च्चितं सरस्वतीदैवतमित्यादि दक्षिणा तत्पुस्तकसर्गान्तम् ।

---

१ ग पुस्तके, आकाशस्येत्यादि श्लोको नास्ति ।

२ ख पुस्तके, उपलभ्यते । ३ ग पुस्तके, राजसूये ।

४ क ख पुस्तकद्वये, प्रणीत— ।

मत्स्यपुराणे विष्णुपुराणदानमुपक्रम्य,—

तदाषाढ़े तु यो दद्याद्घृतधेनुसमन्वितम् ।
[१]पौर्णमास्यां विधौतात्मा स पदं याति वारुणम् ॥

पूजादि विधाय ॐ अद्याषाढ़े मासि शुक्लपक्षे पौर्णमास्यां तिथौ विशिष्टभारतवर्षाख्यभूप्रदेशे अमुकगोत्रोऽमुकनामाहं वारुणपद-प्राप्तिकाम इदं विष्णुपुराणपुस्तकं घृतधेनुसमन्वितमर्च्चितं सवस्त्रं सरस्वतीदैवतमित्यादि दक्षिणान्तम् ।

मत्स्यपुराणे श्रीभागवतदाने,—

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ॥
लिखित्वा तु यो दद्याद्धेमसिंहसमन्वितम् ।
प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥

पूजादि विधाय ॐ अद्य भाद्रे मासि शुक्लपक्षे पौर्णमास्यां तिथावित्यादि परमपदप्राप्तिकाम इदं भागवतमहापुराणं हेम-सिंहसमन्वितं सरस्वतीदैवतमित्यादि दक्षिणान्तम् ।

मत्स्यपुराणे तत्पुस्तकदाने,—

विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् ।
यो दद्यात् पृथिवी तेन दत्ता भवति चाखया ॥

पूजादि विधाय ॐ अद्य विषुवसंक्रान्त्यामित्यादि पृथिवीदान फलसमफलप्राप्तिकाम इदं मत्स्यपुराणपुस्तकं हेममत्स्यधेनुसम-न्वितं सवस्त्रमर्च्चितं सरस्वतीदैवतमित्यादि दक्षिणान्तम् ।

---

१ ग पुस्तके, पौर्णमास्यां विधानेन सम्पदं याति वारुणम् ।

स्कन्दपुराणे काशीखण्डदाने,—

य एतत् पुस्तकं रम्यं लेखयित्वा समर्पयेत्।
अखिलानि पुराणानि तेन दत्तानि नान्यथा॥
अत्राख्यानानि यावन्ति श्लोका यावन्त एव हि।
तथा पदानि यावन्ति वर्णा यावन्त एव हि॥
यावन्त्यपि च पत्राणि यावत्यः पत्रपङ्क्तयः।
गुणसूत्राणि यावन्ति यावन्तः पटतन्तवः॥
चित्ररूपाणि यावन्ति रम्यपुस्तकसंपुटे।
तावद्युगसहस्राणि दाता स्वर्गे महीयते॥

अत्र पटतन्तव इत्यनेन समस्तदाने वस्त्रसाहित्यं बोद्धव्यम्। पुस्तक-संपुट इत्यनेन सर्व्वमेव पुस्तकं संपुटसहितं कृत्वा देयमिति च बोद्धव्यम्।

पूजादि विधाय अद्येत्यादि अखिलपुराणदानजन्यफलसमफल-प्राप्ति-स्कन्दपुराणान्तर्गतैतत्काशीखण्डपुस्तकस्य यावदाख्यान यावत्-श्लोक-यावत्पद-यावद्वर्ण-यावत्पत्र-यावत्पत्रपंक्ति यावद्गुणसूत्र याव-देतत्पुस्तकाच्छादनपटतन्तु यावदेतत्पुस्तकसंपुटस्थचित्ररूप तावत्-समसंख्ययुगसहस्रावच्छिन्नस्वर्गलोकमहितत्वकाम इदं स्कन्दपुराणा-न्तर्गतकाशीखण्डपुस्तकं सवस्त्रं सरस्वतीदैवतमित्यादि दक्षिणा-न्तम्।

## अथ विपुलगृहदानम्।

भविष्यपुराणे,—

सर्व्वोपकरणोपेतं यो दद्याद्विपुलं गृहम्।
ब्राह्मणाय दरिद्राय विदुषे च कुटुम्बिने॥

क्रीड़ित्वा सुचिरं स्वर्गे मानुष्यं लोकमागतः ।
भवत्यव्याहतैश्वर्य्यः सर्व्वकामसमन्वितः ॥

उपकरणानि च ।

वर्षोपभोग्य धान्य लवण तैल घृत गुड़ मरीचादि वणिग्द्रव्य-मुद्गमाषादि व्रीहिस्थाल्यादि रन्धनोचितसामग्री-शिलापट्टमुषलो-दूखल सूर्प सम्मार्ज्जनी कुद्दाल दात्र कुठार खनित्र दीपवृच दर्व्वी मृन्मयकलसादि गृहवसत्युचितसामग्री-काष्ठपादुका कांस्यभाजन भोजनपात्र पानपात्र पीठ शय्या गो महिषी दास दासी नाना-विधभक्ष्यसामग्री-कनकरजतबहुविधवस्त्रादीनि ।

वक्ष्यमाणसाधारणप्रतिष्ठाविहितहोमादिकं कृत्वा पूजादि विधाय—

इदं गृहं गृहाण त्वं सर्व्वोपकरणान्वितम् ।
तव विप्रस्य दानेन ममास्त्वव्याहतं फलम् ॥

इति पठित्वा ॐ अद्येत्यादि सुचिरकाल स्वर्गक्रीड़न पूर्व्वक मानुष्यलोकगमन-तदुत्तराव्याहतैश्वर्य्यत्व-सर्व्वकामसमन्वितत्व-भवनकामो वर्षोपभोग्यसर्व्वोपकरणोपेतमिदं विपुलगृहमर्चितं विष्णुदैवतममुकगोत्रायेत्यादि दक्षिणागृहप्रवेशान्तम् ।

स्कन्दपुराणे,—

यावद्गृहवसत्युचितपूर्व्वोक्तसामग्रीसहितगृहदाने,—

गृहं यस्तु प्रयच्छेत सर्व्वकामसमृद्धिमत् ।
स लोकं ब्रह्मणः[१] प्राप्य सर्व्वकामैर्निषेव्यते ॥

---

१ ग पुस्तके, ब्राह्मणम् ।

वर्षकोटीर्वसेत्तत्र[1] सततस्तेन कर्म्मणा।
गृहमेधी सदा दाता भोगवांश्चैव जायते॥

सर्व्वकामसमृद्धिमदिति यावद्गृहवस्त्वुचितपूर्व्वोक्तसामग्री[2]सम्पन्नमित्यर्थः।

पूजादि विधाय "इदं गृहं गृहाण त्वम्"इत्यादि" पठित्वा ॐ अद्येत्यादि ब्रह्मलोकावाप्तिपूर्व्वकसर्व्वकामनिषेव्यमानत्व-तल्लोकाधिकरणकवर्षकोटिचतुष्टयवास-तदुत्तरगृहमेधित्व-सदादातृत्व-भोगित्व-भवनकामः सर्व्वकामसमृद्धिमदिदं विपुलगृहमर्च्चितं विष्णुदैवतममुकगोत्रायेत्यादि दक्षिणा गृहप्रवेशान्तम्।

विष्णुधर्म्मोत्तरे,—

धनधान्ययुतं स्फीतं सर्व्वोपकरणैर्युतम्।
शय्यासनयुतं[3] रम्यं गोऽजाव्यश्वयुतं तथा॥
गृहं दत्वा द्विजेन्द्राय तावत् स्वर्गमुपाश्नुते।
यावत् कल्पावसानन्तु कल्पादौ पार्थिवो भवेत्॥

स्फीतं विपुलं, रम्यं सौधादिविचित्रम्। उपकरणानि च पूर्व्वोक्तानि गोऽजाव्यश्वाधिकमत्र।

पूजादि विधाय "इदं गृहं गृहाण त्वम्"इत्यादि पठित्वा-ॐ अद्येत्यादि यावत्कल्पावसानस्वर्गभोग-तदुत्तरकल्पान्तरादि पार्थिवत्व-भवनकामो धनधान्ययुतं स्फीतं सर्व्वोपकरणैर्युतं शय्यासनयुतं रम्यं

---

१ क पुस्तके ,स तत्रोष्य। २ ग पुस्तके,-सम्पत्त्यर्थम्।
३ ग पुस्तके, शय्याघृतयुतम्।

गोऽजाव्यश्वयुतमिदं विपुलगृहमर्च्चितं विष्णुदैवतममुकगोत्रायेत्यादि दक्षिणागृहप्रवेशान्तम्।

केवलगृहदाने। विष्णुधर्म्मोत्तरे,—

ब्राह्मणाय गृहं दत्वा वसूनां लोकमश्नुते।

पूजादि विधाय ॐ अद्येत्यादि वसुलोकप्राप्तिकाम इदं गृहमर्च्चितं विष्णुदैवतमित्यादि दक्षिणा गृहप्रवेशान्तम्। याज्ञवल्क्योक्तात्यन्तसुखिलभवनकामो वा।

रथमश्वं गजं दासीं शय्यां गृहमथापि वा।
भूमिं वा यः प्रयच्छेत स राजा भुवि जायते॥

इति स्कन्दपुराणवचनात् पृथिव्यधिकरणकराजलभवनकाम इति वा।

## अथ कन्यादानम्।

अत्र केचित्,—

क्षौरस्य कर्म्मानर्हत्वप्रतिपादकत्वात् विवाहस्य च शुचिना कर्त्तव्यत्वात् विवाहदिने शिष्टाचारमुल्लङ्घ्य क्षौरं नाचरन्ति। तदशुद्धम्— उपनयनवत् विवाहेऽपि क्षौरस्य वाचनिकत्वात् न दोषावहत्वम्।

यथा हयग्रीवे श्रीविवाहे,—

ततो नापितमानीय क्षुरकर्म्मसुपेशलम्।
तेन सङ्कल्पयेत् क्षौरं श्रिया देव्यास्तथा हरेः॥
ततो नीराजनं कृत्वा स्नापयेच्छ्रीजनार्द्दनौ।

अन्ये तु कन्यादानं कृत्वैव पश्चात् क्षौरमाचरन्ति॥

तदप्यशुद्धम्।

स्वयम्बरानन्तरञ्च पाणिं देव्यास्तु ग्राहयेत्।

इति हयशीर्षवचनात्।

बहुमुनिमतमेतत् सम्प्रदानं प्रधानम्।

शुभयवदनचन्द्रालोकनाद्यञ्च केचित्॥

इति राजमार्त्तण्डवचनाच्च।

मुखनियमस्तु कन्यादाने प्रागेव लिखितः।

परञ्च,—

देव्या हस्ते जलं दद्यात्तु देवस्य चक्रिणः।

इति हयशीर्षवचनाद्वरहस्तोपरि कन्याहस्तं कृत्वा कन्याहस्त एवो-त्सृज्य जलकुशदानं न तु वरहस्ते इति शिष्टाचारोऽपीदृश एवेति।

विष्णुः,— [१]पैतापुत्रीं त्रिस्त्रिर्वाचयेत्।

[२]पैतापुत्रीं पितृपुत्रसम्बन्धं विवाहे त्रिस्त्रिः त्रिपौरुषं वाचये-दित्यर्थः। त्रिस्त्रिरिति वीप्सा कन्यावरोभयपक्षापेक्षया।

तथा च गृह्यपरिशिष्टम्,—

कन्यां वरयमाणानामेष धर्म्मो विधीयते।

प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः॥

उभयस्यापि पक्षस्य पैतापुत्रीमुपक्रमेत्।

प्रतिगृह्णन्तीत्युत्तरवाक्याद्वरयन्तीत्यत्र दानलक्षणा वरणधर्म्मप्रवर-कीर्त्तनप्राप्त्यर्थां च तेन आर्षेयं प्रवृणीतेति वरणे कात्यायनवचनात्। त्रैपुरुषिकं प्रवरकीर्त्तनमपि कार्य्यम्। आर्षेयं प्रवरः।

---

१ पितापुत्रीम्। २ पितापुत्रीम्।

अतएव असमानार्षगोत्रजामिति निषेधोऽपि सङ्गच्छते।

तथाचाग्निपुराणे,—

नामगोत्रे समुच्चार्य्य संप्रदानस्य चात्मनः।
संप्रदेयं प्रयच्छन्ति कन्यादाने त्रिपौरुषम्॥

त्रैपुरुषिकवाक्यमपि प्रपितामहादिक्रमेण न तु पित्रादिक्रमेण कार्य्यम्।

राजमार्त्तण्डे ब्रह्मपुराणवचनम्,—

नान्दीमुखे विवाहे च प्रपितामहपूर्व्वकम्।
वाक्यमुच्चारयेद्धीमानन्यत्र पितृपूर्व्वकम्॥

नान्दीमुख इति शाखिविशेषव्यवस्थापितम्।

अत्र केचित्—

त्रींस्त्रीन् वारान् ब्रूयादिति सुमन्तुवचनात् सर्व्वमेव वाक्यं त्रिरावर्त्तयन्ति। तन्न,

कालिकापुराणे पार्व्वतीवाग्दानसमये हिमवतो वाक्यम्,—

मङ्गलैः पूज्य देवेशमिदमाह पुनर्गिरिः।
दत्ता दत्ता पुनर्दत्ता उमा सत्येन ते विभो॥

रामायणे धनुर्भङ्गानन्तरमतिहर्षात् सीतावाग्दानकाले जनकवाक्यम्,—

इमे कन्ये प्रयच्छामि त्रिर्वदामि न संशयः।

तथा च कठगृह्यम्,—

समेतेषु ज्ञात्यादिष्वहं ददानि ते इत्यस्य त्रिरुच्चारणं करोति संप्रदाता।

अस्यार्थः,—

प्रत्याख्यानशङ्कया कश्चिद्रूपेण समागतेषु ज्ञातिषु ब्राह्मणादिषु पुरतो दाता अहं ददामि ते इति प्रतिज्ञावाक्यं चिरावर्त्तनीयमिति।

ततश्च एतेषां वचनानामेकवाक्यतया सुमन्तुवचनमपि वाग्दानविषयं मन्तव्यं न तु संप्रदानविषयं [१]पृथक्श्रुतिकल्पनागौरवात् संप्रदानवाक्यस्य पुनःपुनरनुष्ठाने ऽदृष्टार्थकल्पनागौरवाच्च। वाग्दाने तु प्रत्याख्यानशङ्कानिरासार्थमेव पुनः पुनरुच्चारणं दृष्टार्थकत्वेन सङ्गच्छते इति।

अतएव गोभिलटीकायां यशोधरेण त्रैपुरुषिकसम्बन्धमुल्लिख्य अमुकी देवी मया ते दत्ता मया ते दत्ता मया ते दत्ता इत्येतावन्मात्रमेव चिरावर्त्त्य वाग्दानप्रयोगो लिखितः।

यच्च,—

मुमोच तोयं भवपाणिपद्मे
दत्तेति दत्तेति पुनः प्रजल्प्य।

इति कालिकापुराणवचनं तद्दानस्य वर्त्तमानत्वात् क्तप्रत्ययस्यातीतार्थासङ्गतेः।

नामगोत्रे समुच्चार्य्य प्रदद्यात्कुङ्कुमान्वितः।
परितुष्टेन भावेन तुभ्यं संप्रददे इति॥

इति व्यासवचनाच्च।

---

१ ग पुस्तके, प्रथम—।

चैपुरुषिकसम्बन्धोच्चारणपूर्व्वकमिमां कन्यां तुभ्यमहं सम्प्रददे इति लड़न्तमेव सम्प्रदानवाक्यं समाप्य इयं ते दत्ता इयं ते दत्ता इयं ते दत्ता इति त्रिरुच्चारणं कर्त्तव्यमित्येवं परम्। ततश्च सुमन्तुवचनस्याप्येतत्परत्वे न काचित् क्षतिरिति।

एवञ्च वाग्दाने-अमुकी देवी मया ते दत्ता मया ते दत्ता मया ते दत्तेति त्रिरावर्त्तनीयम्।

सम्प्रदाने तु-सम्प्रददे इति लड़न्तमेव सम्प्रदानवाक्यं समाप्य इयं ते दत्ता इयं ते दत्ता इयं ते दत्तेति त्रिरावर्त्य कन्याहस्ताधारभूतवरहस्ते कुशजलं देयमिति।

भविष्ये,—

तिलराशिः क्षितौ यावद्दिवाकरसमुच्छ्रितः।
तस्य वर्षशते पूर्णे तिल एकः प्रणश्यते॥
विद्यते च क्षयस्तस्य कन्यादाने न विद्यते।

प्रथमं शुभे लग्ने मुखचन्द्रिकां विधाय स्वगृह्योक्तविधिना वरणं कृत्वा।

वाससा प्रावृतां यज्ञोपवीतिनीं दद्यात्" इति गोभिलवचनात् यज्ञोपवीतधारणपरीपाट्या वाससाच्छादयाच्चयित्वा प्रजापतिञ्च संपूज्य जलेनाभ्युक्ष्य इमां कन्यां तुभ्यमहं ददानीति वरहस्ते जलं दत्वा ददस्वेति तेनोक्ते वरहस्तोपरि कन्याहस्तं विधाय वक्ष्यमाणहस्तलेपमुभयोर्हस्ते दत्वा आचारात् कुशवेण्या वद्ध्वा कुशतिलजलान्यादाय,—

ॐ अद्येत्यादि अक्षयस्वर्गकामोऽमुकगोत्रस्यामुकप्रवरस्यामुकस्य

प्रपौत्रायामुकगोत्रस्यामुकप्रवरस्यामुकस्य पौत्रायामुकगोत्रस्यामुक-प्रवरस्यामुकस्य पुत्रायामुकगोत्रायामुकप्रवरायामुकशर्म्मणे तुभ्यं ब्राह्मणाय वराय अर्च्चिताय अमुकगोत्रस्यामुकप्रवरस्यामुकस्य प्रपौत्रीममुकगोत्रस्यामुकप्रवरस्यामुकस्य पौत्रीममुकगोत्रस्यामुक-प्रवरस्यामुकस्य पुत्रीममुकगोत्राममुप्रवराममुकीदेवी मर्च्चितां यथा-शक्त्यलङ्कृतां वासोयुग्माच्छादितां प्रजापतिदैवतामिमां कन्यामहं सम्प्रददे। इयं ते दत्ता इयं ते दत्ता इयं ते दत्तेति कन्या-हस्तोपरि कुशजलं दद्यात्। स्वस्तीति वरेणोक्ते काञ्चनदक्षिणां दद्यात्। वरश्च गायत्रीं कामस्तुतिञ्च पठित्वा कन्येयं प्रजापति-दैवताकेति वदेत्।

हस्तलेपश्च हयशीर्षे उक्तः,—

हस्तलेपमतो वक्ष्ये कन्यासौभाग्यदायकम्।
कृताञ्जलिः शिखा कान्ता, कर्पूरं कुङ्कुमं तथा॥
मधूकपुष्पं सर्ज्जरसं गुञ्जा जातीफलन्तथा।
एषामेकतमं गृह्य समस्तं वा विचक्षणः॥
यस्या विवाहसमये योजयेद्गदानिमान्।
न दौर्भाग्यं न वैधव्यं सा कन्या प्राप्नुयात् क्वचित्॥

कृताञ्जलिः लाजानुया इतिख्यातो वृक्षभेदः। शिखा लाङ्गलिका इतिख्यातो वृक्षः। कान्ता प्रियङ्गुः।

तथाच भूरिप्रयोगकोषे,—

शिखा चाग्ने[१], शिखा चूड़ा ज्वाला लाङ्गलिकाद्रुमे।

१ ग पुस्तके, शिखाचाग्निः॥

कान्ताऽग्निमि[1] प्रिये रम्ये[2] कौहे स्त्री फलिनी स्त्रियोः।

आदित्यपुराणे,—

कनकस्य च यो दाता भूमिदाता च यो नरः।
कन्यादानप्रसक्तस्य समं यान्ति त्रयो रथाः॥
श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः।
मुक्ता वै सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते॥

ॐ अद्येत्यादि कनकदानभूमिदानफलसमफलप्राप्ति-पितृपितामहप्रपितामहसर्व्वपापविमुक्ति-ब्रह्मलोकप्राप्तिकाम इति वा।

गान्धर्व्वासुरविवाहयोरपि फलमुक्तमादिपुराणे,—

गान्धर्व्वेण विवाहेन यस्तु कन्यां प्रयच्छति।
गान्धर्व्वलोकं व्रजति गन्धर्व्वैः पूज्यते नरः॥
शुल्केन दद्यात्यः कन्यां वराय सदृशाय च।
किन्नरैः सह गीयेत गान्धर्व्वं लोकमेति च॥

एतच्च वैश्यशूद्रविषयमेव तेषामेवासुरविवाहस्य विहितत्वादन्येषां निन्दितत्वात्।

तथाच कश्यपः,—

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः।
आत्मविक्रयिणः पापा महाकिल्विषकारिणः॥
पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम्।
क्रीता द्रव्येण या नारी न सा पत्न्यभिधीयते।
न सा दैवे न सा पैत्रे दासीं तां काश्यपोऽब्रवीत्॥

---

१ ख पुस्तके, अग्निर्गोप्रिये। २ ग पुस्तके प्रियारण्ये।

## अथ कृष्णाजिनदानम्।

मत्स्यपुराणे,—

वैशाखी पौर्णमासी तु ग्रहणं चन्द्रसूर्य्ययोः।
पौर्णमासी तथा माघी तस्यां दानफलं महत्॥
गोमयेनोपलिप्ते तु शुचौ देशे नराधिप।
आदावेव समास्तीर्य्य शोभनं वस्त्रमाविकम्॥
ततः सशृङ्गं सखुरमास्तरेत् कृष्णमार्गणम्।
कर्त्तव्यं रुक्मशृङ्गन्तु रुक्मदन्तान्तथैव च॥
लाङ्गूलमुक्तासंयुक्तं तिलच्छन्नन्तथैव च।
तिलैः सुशिथिलं कृत्वा वाससाच्छादयेद्बुधः॥
सुवर्णनाभं तत् कुर्य्यादलङ्कुर्य्याद्विशेषतः।
रत्नैर्गन्धैर्यथा शक्त्या तस्या दिक्षु च विन्यसेत्॥
कांस्यपात्राणि चत्वारि तेषां दद्याद्यथाक्रमम्।
घृतं क्षीरं दधि क्षौद्रमेवं दत्वा यथाविधि॥
तत्प्रतिग्रहविद्विद्वानाहिताग्निर्द्विजोत्तमः।
स्नातो वस्त्रयुगच्छन्नः स्वशक्त्या चाप्यलङ्कृतः।
प्रतिग्रहस्य तस्योक्तः पुच्छदेशे महीपते॥
अनेन विधिना दत्वा यथावत् कृष्णमार्गणम्।
समग्रं भूमिदानस्य फलं प्राप्नोत्यसंशयम्।
सर्व्वांश्च लोकांश्चरति कामचारी विहङ्गमः
आहूतसंप्लवं यावत् स्वर्गं प्राप्नोत्यसंशयम्॥

गोमयोपलिप्तस्थाने शोभनं कम्बलमास्तीर्य्य तदुपरि सशृङ्ग-सखुर-कृष्णाजिनं विन्यस्य स्वर्णशृङ्ग-स्वर्णखुर-दन्त-मुक्तायुक्तलाङ्गूलं कृत्वा वस्त्रेणाच्छाद्य स्वर्णगर्भं कृत्वा रत्नैर्गन्धैश्चालङ्कृत्य चत्वारि कांस्य-पात्राणि चतुर्द्दिक्षु यथाक्रमं घृतदुग्धदधिमधुपूरितानि संस्थाप्य पूजादि विधाय,—

ॐ अद्येत्यादि समग्रभूमिदानफलसमफलप्राप्ति-कामचार सर्व्व-लोकसञ्चरणाहूतसंप्लवपर्य्यन्तस्वर्गप्राप्तिकाम इदं कृष्णाजिनं रुक्मशृङ्गं रुक्मदन्तं मुक्तायुक्तलाङ्गूलं तिलच्छन्नं वस्त्राच्छादितं सुवर्णगर्भं रत्नै-र्गन्धैश्च अलङ्कृतं चतुर्द्दिक्षु घृतदुग्धदधिमधुपूरितकांस्यपात्रचतुष्टय-सहितमुत्तानाङ्गिरोदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणायाहिताग्नये तुभ्यमहं संप्रददे। गृहीता पुच्छे गृहीत्वा स्वस्तीति वदेत्। ततः सुवर्णदक्षिणां गृहीत्वा गायत्रीं कामस्तुतिञ्च पठित्वा कृष्णाजिन-मिदमुत्तानाङ्गिरोदैवतमिति वदेत्।

## अथाश्वदानम्।

महाभारते,—

यावन्ति लोमानि हये भवन्तीह नरेश्वर।
तावतो वाजिदा लोकान् प्राप्नुवन्तीह पुष्कलान्॥

लोकान् देवलोकान्। पूजादि विधाय,—

उच्चैःश्रवास्त्वमश्वानां राज्ञां विजयकारकः।
सूर्य्यवाहनमस्मभ्यमतः शान्तिं प्रयच्छ मे॥
मार्त्तण्डाय सुरेशाय काश्यपाय त्रिमूर्त्तये।
जगद्दीपाय सूर्य्याय त्रिवेदाय नमोऽस्तु ते॥

इति पुष्पाञ्जलिना सम्पूज्य ॐ अद्येत्यादि एतद्वाजिलोम समसंख्यदेवलोकप्राप्तिकाम इममश्वं यमदैवतमित्यादि दक्षिणा-न्तकर्णस्पर्शान्तम्।

ततोऽश्वं प्रदक्षिणीकृत्य पठेत्,—

महार्णवे समुत्पन्न उच्चैःश्रवसपुत्रक।
मया त्वं विप्रमुख्याय दत्तो हय सुखी भव॥

नन्दिपुराणे—

योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेत्।
स शक्रस्य वसेल्लोके यथा शक्रो युगान् दश॥
प्राप्यान्ते चाथ मानुष्यं राजा भवति ऋद्धिमान्।

पूजादि विधाय ॐ अद्येत्यादि शक्रलोकाधिकरणकदशयुग शक्रवद्वास-तदुत्तरमर्त्त्यलोकीयसमृद्धिमद्राजत्वभवनकाम इममश्वं यमदैवतमित्यादि दक्षिणान्तकर्णस्पर्शान्तम्।

स्कन्दपुराणे—

अश्वं यस्तु प्रयच्छेत हेमचित्रं सुलक्षणम्।
स तेन कर्म्मणा [1]विप्र गान्धर्व्वं लोकमश्नुते॥
यावन्ति तस्य लोमानि तावद्वर्षशतानि च।
श्वेतञ्च दत्वा विप्राय फलं दशगुणं लभेत्॥
वड़वायाः प्रदानेन श्वेततुल्यं फलं स्मृतम्।

हेमचित्रं हेमाभरणविचित्रम्। पूजादि विधाय ॐ अद्ये-

---

१ ख पुस्तके, देव—

त्यादि एतद्दवलोमसमसंख्यवर्षशतगन्धर्व्वलोकप्राप्तिकाम इममश्वं हेमविचित्रं सुलक्षणं यमदैवतमित्यादि दक्षिणाश्वकर्णस्पर्शान्तम्।

श्वेताश्वदाने,—

अद्येत्यादि श्वेतेतरहयदानफलदशगुणफलप्राप्तिकाम इममश्वं श्वेतं यमदैवतमित्यादि दक्षिणाश्वकर्णस्पर्शान्तम्।

एवं वड़वादानेऽपि। अश्विसालोक्यमश्वद इति मनुवचना-दश्विसालोक्यप्राप्तिकाम इति वा।

याज्ञवल्क्योक्तस्वर्गलोकमहितत्वकाम इति वा।

[1]रथमश्वं गजं दासीं कन्यां गृहमथापि वा।
भूमिञ्च यः प्रयच्छेत स राजा भुवि जायते॥

इति स्कन्दपुराणवचनात् भूतलाधिकरणकराजत्वभवनकामो वा। हयप्रतिग्रहस्त्वत्यन्तगर्हितः।

यथा—तिलधेनुं गुड़धेनुं धेनुञ्चोभयतोमुखीम्।
कृष्णाजिनं हयं गृह्य न पुनर्मानुषो भवेत्॥

कृष्णाजिनप्रतिग्रहीतारमुद्दिश्य[2] मत्स्यपुराणे—

न स्पृश्यः स द्विजो राजंश्चितियूपसमो हि सः।
दाने च श्राद्धकाले च दूरतः परिवर्ज्जयेत्॥

आदित्यपुराणे—

किं करिष्यत्यसौ मूढ़ो [3]गृहीत्वोभयतोमुखीम्।

आग्नेये—

हस्त्यश्वरथयानानि मृतशय्यासनानि च।

१ क पुस्तके, वरम्। २ ग पुस्तके, अधिकृत्य। ३ ग पुस्तके, गृह्णन्।

कृष्णाजिनञ्च गृह्णाति तथैवोभयतोमुखीम् ॥
पापकृत् सोऽधमो लोके स प्रेतो जायते मृतः[१]।

एकादशाहदेयशय्याधिकारे ब्रह्मपुराणे—

तेन कृष्णा तु सा शय्या न ग्राह्या द्विजसत्तमैः।
गृहीतायां तु शय्यायां पुनः संस्कारमर्हति ॥
वेदेषु च पुराणेषु शय्या सर्व्वत्र गर्हिता।
गृहीतायान्तु जायन्ते सर्वे नरकगामिनः ॥

कृष्णा पापबहुला। सर्वे वंश्या इत्यर्थः।

ब्राह्मे,—

ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुदाहृतः।
अश्वश्वधेनुमातङ्गतिललौहांश्च वर्ज्जयेत् ॥
शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च।
नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा ॥
ब्रह्महत्यां सुरापानमपि स्तेयं तरिष्यति।
आतुराद्यद्गृहीतन्तु तत्कथं वै तरिष्यति ॥

आतुरान्मुमूर्षोः।

तथा—वरं विक्रयणं मातुर्वरं विक्रयणं पितुः।
न तु गङ्गातटे किञ्चिद्गृह्णीयाद्बुद्धिमान्नरः ॥

प्रतिग्रहप्रायश्चित्तमाह बृहस्पतिः,—

तान् प्रतिग्रहजान् दोषान् प्राणायामैः व्यवस्थिताः।

---

१ क पुस्तके, नरः।

नार्थयन्ति हि विद्वांसो वायुर्मेघानिवाम्बरे ॥

व्यवस्थिता इत्यनेन प्राणायामे विशेषनिष्फलप्रतिपादनात् प्राणायामशतं कार्य्यमिति बोद्धव्यम्।

तथाच याज्ञवल्क्यः,—

प्राणायामशतं कार्य्यं सर्वपापापनुत्तये।
उपपातकयुक्तानामनादिष्टस्य चैव हि ॥

असत्प्रतिग्रहप्रायश्चित्तमाह याज्ञवल्क्यः,—

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः।
गायत्रीजापनिरतो मुच्यतेऽसत्प्रतिग्रहात् ॥

तुलापुरुषादि षोडशमहादानानि धान्याचलादिदशविधाचलदानानि मत्स्यपुराणोक्तानि महाराजेतरासाध्यान्यत्रोपेक्षितानि महादानपद्धतौ द्रष्टव्यानि। अन्यानि च दानानि यथायथमाकरेषूह्यानि।

अशौचान्तद्वितीयदिनविहितदाने मत्स्यपुराणे,—

अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्।
काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम् ॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः।
वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा ॥

अशौचान्तादिति। अशौचान्ताहादित्यर्थः। अतएवाशौचान्ताहाद्द्वितीयेऽह्नीति प्रयोक्तव्यम्। स्वाधीने शब्दप्रयोगे वाक्यरचनायां लक्षणाया अयुक्तत्वादिति। विलक्षणां विचित्रां खट्टासन-पादुका-छत्र-भोजनपात्र-जलपात्र-सताम्बूलपात्राच्छादनोपधानादि नानाविधोप-

करणान्वितामित्यर्थः। काञ्चनपुरुषदानन्तु शय्यादानात् पृथगेव तद्दद्यादित्यभिसम्बन्धात्।

द्विजदम्पतिपूजनमपि पृथगेव न तु वृषोत्सर्गस्याङ्गं पारस्करादिनानामुनिभिर्वृषोत्सर्गाभिधाने द्विजदम्पतिपूजानभिधानात् प्रधानीभूतशय्यादिमध्यपाताच्च।

न च क्त्वाप्रत्ययेनोपकारकत्वबोधनात् "फलवत् सन्निधावफलं तदङ्गम्" इति न्यायादङ्गत्वं वाच्यम्। क्त्वाप्रत्ययस्यानन्तर्य्यार्थमात्राभिधायकत्वात्।

न हि भुक्त्वा स्वपितीत्यादौ शयनस्योपकारकमङ्गं वा भोजनं भवति। नचोपकारकत्वमात्रमङ्गताप्रयोजकं आरम्भणीयादौ व्यभिचारात्।

किन्तूभयस्मिन् क्रियमाणे द्विजदम्पतिपूजनानन्तरमेव वृषोत्सर्गः कार्य्य इति क्रम एव क्त्वाप्रत्ययार्थः।

न च तत्र पाठक्रमानुरोधात् क्रमो लभ्यत एवेति वाच्यम्।

क्त्वाबोधितानन्तर्य्यार्थबलात् "वृहस्पतिसवेनेष्ट्वा सोमेन यजेतेति-वत्तत्‌द्विजदम्पतिपूजनस्यैव एकादशाहवृषोत्सर्गाधिकारात् उभयस्मिन् क्रियमाणे विश्वजिन्न्यायात् स्वर्गफलमुद्दिश्य दिजदम्पती पूजयित्वैव वृषोत्सर्गः कार्य्यः, वृषोत्सर्गाशक्तौ तु निरपेक्षद्विजदम्पतिपूजनं निर्विवादमेवेति ध्येयम्।

नानाभरणभूषणैरिति, आभरणानि कुण्डलाङ्गुरीयशङ्खादीनि। भूषणानि गन्धपुष्पवस्त्रादीनि। देयेति पृथग्विधानश्रवणात् शय्याङ्गकपिलादानमपि पृथगेवेति।

किन्तु विलक्षणशय्यादान-काञ्चनपुरुषदान-द्विजदम्पतिपूजानां फलविशेषानुपदेशात् विश्वजिन्न्यायेन स्वर्गफलमेव कल्पनीयम्। वृषोत्सर्गकपिलादानयोस्तु मुन्यन्तरोक्तः फलविशेषोऽस्त्येव।

यथा देवव्रतः,—

एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः।
प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति॥

याज्ञवल्क्यः,—

कपिलाचेत्तारयति भूयश्चासप्तमं कुलम्।

इत्यादि। अतएव वृषोत्सर्गशय्यादीनां काम्यतापि वक्ष्यते। ततो विलक्षणां शय्यां खट्वादिनानाविधोपकरणमानीय—

सोपकरणायै शय्यायै नमः,

उत्तानाङ्गिरसे नमः,

एतत्सम्प्रदानब्राह्मणाय नमः,

इति पाद्यादिभिरुदङ्मुखं सम्पूज्य इमां सोपकरणां शय्यां तुभ्यं ददानीति, द्विजकरे जलं दत्वा ददस्वेति तेनोक्ते वारिणा शय्यां प्रोक्ष्य वामहस्तेन शय्यां स्पृष्ट्वा दक्षिणपाणिना कुशत्रयतिलजलान्यादाय,—

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः स्वर्गप्राप्तिकामोऽमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय इमां नानाविधोपकरणां विलक्षणां शय्यामुत्तानाङ्गिरोदैवतामर्च्चितां तुभ्यमहं संप्रददे। द्विजकरमध्ये सकुशं जलं दद्यात्। गृहीताशेयतीर्थेन करमध्येन स्पृष्ट्वा स्वस्तीति प्रतिवदेत्।

ॐ अद्येत्यादि अमुककामनया तुभ्यं कृतैतद्विलक्षणशय्यादानप्रतिष्ठार्थं दक्षिणामिदं काञ्चनमग्निदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। गृहीता स्वस्तीत्युक्ता काञ्चनं स्पृशेत्। ततो गायत्रीं ॐ कोऽदादिति पठित्वा शय्येयमुत्तानाङ्गिरोदैवतेत्युक्ता शय्यामारोहेत्[१]।

ततः,—फलवस्त्रसमन्वितकाञ्चनपुरुषं विष्णुं ब्राह्मणञ्च सम्पूज्य पूर्ब्ववत् कृत्वा—

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः स्वर्गप्राप्तिकामोऽमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय इमं काञ्चनपुरुषं फलवस्त्रसमन्वितं विष्णुदैवतं तुभ्यमहं सम्प्रददे इति कुशजलं ब्राह्मणकरे दद्यात्। काञ्चनदक्षिणादिकमपि सर्व्वं पूर्ब्ववत्। करमध्येन प्रतिग्रहः।

ततो द्विजदम्पती आनीय,—

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्ताद्द्वितीयेऽह्नि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः स्वर्गप्राप्तिकामोऽहं द्विजदम्पती पूजयिष्ये।

इति संकल्प्य द्विजदम्पतिभ्यां नम इति गन्धपुष्पताम्बूलनानाविधोपहारवस्त्रालङ्कारादिभिः पूजयेत्।

ॐ अद्येत्यादि कृतैतद्द्विजदम्पतिपूजाकर्म्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनमग्निदैवतममुकगोत्रनामभ्यां द्विजदम्पतिभ्यामहं सम्प्रददे। इति दक्षिणां दद्यात्।

---

१ ख पुस्तके, आरोहयेत्।

## तदनन्तरं वृषोत्सर्गः।

यद्यपि कस्यचित् स्वीकारासम्भवात् वृषोत्सर्गस्य न दानत्वं किन्तु "एनं युवानं पतिं वो ददामि" इति मन्त्रलिङ्गेन वत्सतरी-गतस्वत्वारोपणेन च वत्सतरीणां देवतात्वावगमात् "देवतोद्देशेन द्रव्यत्यागो याग" इति यागलक्षणव्यापनात् यागत्वमेव। तथापि प्रसङ्गात् सोऽपि निरूप्यते इति।

[1]श्रीगोविन्दपदद्वन्द्वमाधाय हृदयाम्बुजे।
अत्र प्रसङ्गसङ्गत्या वृषोत्सर्गो विविच्यते॥

वृषोत्सर्गविधिमाह देवव्रतः,—

एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः।
प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति॥
मासिके वा त्रिपक्षे वा षण्मासे चाब्दिके तथा।
वृषोत्सर्गस्तु कर्त्तव्यो यावन्न स्यात् सपिण्डता॥

एकादशाहेऽशक्तौ मासिकादिक्रमिकः[2] कालः॥ मासिकादावपि एकादशाहोक्तमेव फलं तस्यैव वैकल्पिककालत्वात् तत्राप्यशक्तौ पारस्कराद्युक्तः कालः।

पारस्करः,—

अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः कार्त्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुजस्य चेति।

आश्वयुजस्य पौर्णमास्यां रेवतीनक्षत्रयुक्तायामित्यर्थः।

---

१ श्लोकोऽयं ग पुस्तके नास्ति। २ क पुस्तके, क्रमः।

तथा च विष्णुधर्म्मोत्तरे,—

अश्वयुक् शुक्लपक्षस्य पञ्चदश्यां नराधिप।
कार्त्तिकेऽप्यथवा माघि वृषोत्सर्गञ्च कारयेत्॥
ग्रहणे द्वे महापुण्ये तथाचैवायनद्वये।
विषुवद्दितये चैव मृताहे बान्धवस्य च।
मृताहो यस्य यस्मिन् वा तस्मिन्नहनि वाचरेत्॥

अन्यस्य मृताहे अन्यस्य कथं न क्रियते इत्याशङ्कायामाह मृताह इति यस्मिन् दिवसे यस्य बान्धवस्य मृताहो मृततिथि र्भवति तस्मिन्नहनि तस्यैवाचरेन्नान्यस्येत्यर्थः।

छन्दोगपरिशिष्टम्,—

कार्त्तिक्यामयने चैव फाल्गुन्यामष्टकासु च।
आषाढ्यां विषुवे चैव पौष्ण आश्वयुजस्य च॥
स्वर्भानुना चोपसृष्टे आदित्ये चन्द्रमस्यपि।
सप्तावरान् सप्तपूर्व्वान्[1] सृष्टस्तारयते वृषः॥

पौष्णं रेवती तद्युक्तायां पौर्णमास्यामित्यर्थः। वत्सराभ्यन्तरे मलमासादिदोषो नास्ति एकादशाहादौ नियमविधानात्।

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा।
तथा तथैव कार्य्याणि न कालस्तु विधीयते॥

इति दक्षवचने नैमित्तिकपदेनागन्तुकनिमित्तोपनिपातविहि-तस्य ग्रहणाद्युपरागनिमित्तकस्नानदानादिवद्पाद्यादिनिमित्तकश्रा-

---

१ ग पुस्तके, उत्सृष्टस्तारयेद्वृषः।

न्तिकर्म्मादिवच्च मरणनिमित्तकैकादशाहविहितवृषोत्सर्गशय्यादाना-
दीनां कर्त्तव्यत्वाच्च।

तथाच वृहस्पतिः,—

नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे।

वृद्धगृहीतवचनञ्च,—

मलमासादिकः कालो वृषोत्सर्गे न दूष्यति।
वत्सरोपरि कर्त्तव्ये कालशुद्धिर्विधीयते॥ इति।

वत्सरात् परन्तु मलमासादिवर्ज्जनम्।

तथाच ज्योतिःपराशरः,—

अग्न्याधानं प्रतिष्ठाञ्च यज्ञदानव्रतानि च।
देवव्रत-वृषोत्सर्ग-चूडाकरणमेखलाः॥
मङ्गल्यमभिषेकञ्च मलमासे विवर्ज्जयेत्।

अथ यद्यपि वृषस्यैवोत्सर्गः श्रूयते तथापि चतस्रो वत्सतर्य्यस्ता-
श्चालङ्कृत्येति पारस्करेणोपादानादेनं युवानं इत्युत्सर्गमन्त्रलिङ्गाच्च।

द्विहायनीभिर्धन्याभिश्चतुर्भिः सह रूपवान्।
द्वाभ्यामथैकयाऽभावादुत्[१]सृष्टव्यो द्विहायनः॥
[२]यो वा हरति षण्डञ्च पिबेत् क्षीरञ्च तद्गवाम्।
यावन्ति तस्य लोमानि तावद्वर्षाण्यधोगतिः।
तासां न चाज्यं पातव्यं शाश्वतीं गतिमिच्छता॥

इत्यग्निपुराणवचनाच्च वत्सतरीचतुष्टयसहितस्यैव वृषस्योत्सर्गः।

---

१ ग पुस्तके, तावत्।
२ ख पुस्तके, यो वाहयते। ग, यो वाहयति यन्तच।

अतएव वत्सतरीचतुष्टयसाहित्येन संकल्पवाक्यं सुगतिसोपानपद्धतौ लिखितम्। एष च शूद्रेणाप्यनुष्ठेयः सामान्येन विधानात्, मत्स्य-पुराणे कृष्णेनाप्यन्त्यजन्मन इति वृषस्य वर्णविशेषकथनाच्च।

अतएव पारस्करे एतयैवोत्सृजेरन्निति एतयैव ऋचा नान्य वाक्येनेत्येवशब्दाद्वाक्यभेदकल्पनागौरवाच्च। उत्सृजेरन्निति चातुर्वर्ण्य-साधारणतया बहुवचनोपादानाच्च रथकारन्यायात् शूद्रेणापि एनं युवानमित्युत्सर्गप्रकाशकमन्त्रः पठनीय एव।

न च,—

अमन्त्रकस्य शूद्रस्य विप्रो मन्त्रेण गृह्यते।

इति ब्राह्मणद्वारा मन्त्रः पठनीय इति वाच्यम्।

प्रधानस्य वृषगतस्वत्वध्वंसरूपस्य स्वयमेवानुष्ठेयस्य मुनिभिरेव तादृशवाक्येनैव विहितस्यानन्यथासिद्धस्य वृषोत्सर्गस्याजातत्वात्।

रुद्राध्यायजपादेस्तु अङ्गत्वेनाचार्य्यद्वाराप्यनुष्ठेयत्वे श्राद्धाङ्गमन्त्र-वदन्यथासिद्धत्वमिति। अतएव मन्त्रपाठानधिकारात् तादृशविशेष-प्रतिपादकवचनाभावाच्च अनुपनीतस्य स्त्रियाश्च वृषोत्सर्गे नाधिकार इति ध्येयम्।

## अथ वृषवत्सतरीलक्षणम्।

पारस्करः,—

एकवर्णो द्विवर्णो वा यो वा यूथं समाच्छादयति यं वा यूथं समाच्छादयेत् लोहित एव वा स्यात् सर्व्वाङ्गैरुपेतो जीववत्सायाः पयस्विन्याः पुत्रो यूथे च रूपवान् तमलङ्कृत्य यूथे मुख्याश्चतस्रो वत्सतर्य्यस्ताश्चालङ्कृत्येति।

एकवर्णो द्विवर्णो वेति सामान्यवर्णोपदेशस्तातुर्वर्णिकएव।

तथाच छन्दोगपरिशिष्टम्—

एकवर्णो द्विवर्णो वा यो वा स्यादष्टकासुतः।
यूथाद्बलतरो वापि समो वा नीच एव वा॥

अष्टकासुत इत्यनेनाष्टमीजातस्य प्राशस्त्यकथनम्।

यत्तु मत्स्यपुराणे,—

[1]श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते।
स्निग्धरक्तेन वर्णेन क्षत्रियस्यापि शस्यते।
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः॥

इति ब्राह्मणादौ वर्णविशेषकथनं तत्प्राशस्त्यार्थम्।

यो वा यूथमित्यनेन यूथाद्बलं यं वा यूथमित्यनेन च यूथाधौबलं न विवक्षितं किन्तु बलवत्त्वपुष्टाङ्गत्वादिकमेवापेक्षणीयमित्यर्थः। लोहित एव वा स्यादित्येवकारेण मत्स्यपुराणोक्तनीलवृषस्यातिप्राशस्त्यकथनम्।

मत्स्यपुराणे,—

चरणानि शिरः पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णस्य तं नीलमिति निर्दिशेत्॥

[2][देवीपुराणेऽपि,—

लोहितो यस्तु वर्णेन शङ्खवर्णखुरस्तथा।
लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः॥]

---

१ ग पुस्तके, कृष्णोदरः श्वेतपृष्ठः।

२ ख पुस्तके, [ ] चिह्नितांशो नास्ति।

वृष एव स मोक्तव्यो न स धार्य्यो गृहे भवेत्।
तदर्थमेषा चरति लोके गाथा पुरातनी॥
एष्टव्याः बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

एनं वृषं लक्षणसन्नियुक्तं
गृहोद्भवं क्रीतमथापि राजन्।
मुक्त्वा न शोचेन्मरणं महात्मा
मोक्षे गतिस्त्वाहमतोऽभिधास्ये॥

अत्र गयाश्राद्धाश्वमेधतुल्यतामभिधाय मोक्षफलकथनादेकादशाहादावपि मोक्षफलमेव नीलवृषोत्सर्गस्य। एतेन सर्व्वत्रैव फलश्रवणात् वृषोत्सर्गः काम्य एव।

अत्र केचित्,—

मत्स्यपुराणे एकादशाहश्राद्धतुल्यतयाभिधानात् शक्तेनावश्यं कर्त्तव्य इति वदन्ति।

तन्न शय्याकाञ्चनपुरुषदानादीनामपि तथात्वप्रसङ्गात्। एकादशाहश्राद्धस्याशक्तं प्रत्यपि नित्यत्वनिश्चयात् तत्तुल्यताभिधानस्य अशक्तं [1]प्रत्यनित्यतारूपफलस्योक्तितएव व्याघाताच्च।

वस्तुतस्तु एकादशाहश्राद्धतुल्यताभिधानस्य फलमेवालीकम्।

तथाहि किमिदमेकादशाहश्राद्धतुल्यतयाऽभिधानफलं अनन्यकालीनत्वं वा[2] शक्तस्यावश्यानुष्ठीयमानत्वं वा अभिन्नकर्त्तृकत्वं वा।

---

१ ग पुस्तके, अनित्यताकल्पनस्य।

२ क पुस्तके, अभिन्नफलत्वं वा इत्यधिकपदमस्ति।

नाद्यः— मासिके वा त्रिपक्षे वा इत्यादि देवव्रतवचने कालान्तरस्यापि प्रतिपादितत्वात्।

न द्वितीयः,—

एकादशाहादौ वृषोत्सर्गस्य प्रेतलोकपरिहार-स्वर्गलोकगमनफलत्वेन नीलवृषगोचरतया मोक्षफलत्वेन कार्त्तिक्यादौ पूर्व्वापरसप्तपुरुषतारणफलत्वेन शय्याकाञ्चनपुरुषदानादीनाञ्च विश्वजिन्न्यायात् स्वर्गमात्रफलत्वेन च एकादशाहश्राद्धस्य तु प्रेतत्वपरिहारमात्रफलत्वेन च पृथक्फलत्वात्।

न तृतीयः,—

एकस्यैव शक्तं प्रति नित्यत्वमशक्तं प्रत्यनित्यत्वमित्यदृष्टाश्रुतकल्पनाया हास्यास्पदत्वात् अन्यथा एकादशाऽश्राद्धस्यापि तुल्यन्यायादशक्तं प्रत्यनित्यता स्यात्।

न चतुर्थः,—

एवञ्च काम्यत्वे निर्णीते सति कामनावतः सर्व्वस्यैवाधिकारात्।

ततश्च,—

महार्हाणि च रत्नानि गाश्च वाहनमेव च।
यानानि दासीर्दासांश्च राज्ञस्तस्यौर्द्ध्वदेहिके॥

इत्यादि रामायणोक्तवत् सर्व्वमेव नित्यकाम्यसामान्यमेकादशाहानुष्ठेयम्।

मत्स्यपुराणे,—शय्यादानादिकमुक्तं तत्प्रकरणे च एकादशाहश्राद्धं नोक्तं कथं वा तन्नुल्यताभिधानं इत्यलं बहुना। वृषालङ्करणन्तु स्वर्णशृङ्गाद्यन्यत्र दृष्टमेवात्र ग्राह्यम्।

तथा,—

त्रिमासादूर्द्ध्वमेतस्य वृषलेनाधिकारिता ।
यावद्दन्ता न शीर्य्यन्ति यावत् सङ्गं न गच्छति ॥
क्रीत्वा वीरक्रयेणैव परिवर्त्त्योपपादिना ।
धान्यक्रीतं गृहे जातं वृषभं तं समुत्सृजेत् ॥
अग्रतो लोहिता पत्नी पार्श्वाभ्यां नीलपाण्डुरे ।
पृष्ठतस्तु भवेत् कृष्णा वृषभस्य विमोचणे ॥

## अथ यूपलक्षणम् ।

चतुर्हस्तो भवेद्यूपो यज्ञकाष्ठसमुद्भवः ।
वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो वृषमौलिकः ॥
सार्द्धहस्तद्वयं तत्र यूपमूर्द्ध्नि प्रदर्शयेत् ।
उपयूपाश्च चत्वारो हस्तत्रय[१]विनिर्म्मिताः ॥

## अथ स्थाननियमः ।

गोशालायां वने गोष्ठे देवतायतनाङ्गने ।
व्रीहिक्षेत्रे कुशक्षेत्रे राजद्वारे चतुष्पथे ॥
गङ्गादिसरितां तीरे गयायां पुण्यभूमिषु ।
वृषोत्सर्गं प्रकुर्वीत शोधयित्वा वसुन्धराम् ॥
चतुर्द्वारान्वितं तत्र हस्तैर्द्वादशभिर्गृहम् ।
चतुर्हस्तमिता वेदी मध्ये कार्य्या परिष्कृता ॥

---

१ क पुस्तके, हस्तद्वय— ।

वत्सराभ्यन्तरे क्रियमाणे एकादशाहादिश्राद्धात् पूर्व्वमेव कार्य्यं न तु परं दैवकृत्यत्वेन पूर्वाह्नविहितत्वात् निषेधश्रवणाच्च।

यथा शाट्यायनः,—

कृत्वैकादशिकं श्राद्धं वृषोत्सर्गं करोति यः।
असिपत्रवने घोरे पितृभिः सह पच्यते॥

अत्र गन्धेनाभ्युक्षणं गवामिति शूलगवोक्ताधिवासस्य—"अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः" इत्यनेन पारस्करेणातिदिष्टत्वादधिवासः कर्त्तव्य एव।

अत्राधुनिकाः,—एकादशाहपूर्वदिनेऽशौचसद्भावात् संवत्सराभ्यन्तरे मासिकादौ च[1]।

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः॥

इति देहाशुद्धिविधानात् संवत्सरात् परमेव माङ्गल्यस्य[2] कर्त्तव्यतावगमात् वृद्धिश्राद्धवदधिवासाभावः। अन्यथा वत्सराभ्यन्तरे वृद्धिश्राद्धस्याप्यनुष्ठानं स्यादिति प्राचीनाचारमुल्लङ्घ्य व्यवस्थापयन्ति। तदशुद्धम्।

यद्यधिवासो वृषोत्सर्गाऽङ्गमित्यस्ति तदाशौचान्तपरदिने वृषोत्सर्ग इत्युपदिशन् विधिरेव तदङ्गान्यपि विदधातीत्यशौचेऽप्यधिवासो वैधः। दशाहिकपिण्डदानवत्तत्राशौचमकिञ्चित्करम्। अनङ्गत्वे तु कस्तत्र प्रसङ्गः कथं वा अन्यदा तदनुष्ठानमिति।

---

१ ग पुस्तके मासिकादौ च नास्ति।
२ क पुस्तके माङ्गल्य-।

न च पूर्व्वदिने प्रधानाधिकाराभावान्नाङ्गेऽधिकार इति वाच्यम्, श्वः कर्त्तव्यनिश्चयेनैव श्वः कर्त्तव्यतया प्रधानाधिकारसम्भवात्। न च तद्दिनेऽधिवास इति वाच्यम्। पूर्वदिनकृत्याङ्गाभावात्। न चाङ्गविधानमन्यदा चरितार्थमिति वाच्यं सामान्यप्राप्तस्याङ्गविधेरनिवार्य्यत्वात्। अन्यथा एकादशाहश्राद्धे पूर्वदिने ब्राह्मणनिमन्त्रणाद्यपि न स्यात्।

न च तत्रापि निमन्त्रणबाध इति वाच्यम्।

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्।
त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके॥

इति मनुना एकोद्दिष्टस्य निमन्त्रणदिनमारभ्य त्र्यहमध्ययननिषेधात्।

तथाच वराहपुराणे,—

अस्तङ्गते तथादित्ये गत्वा[1] विप्रनिवेशनम्।
दद्यात्तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम्॥
प्रेतस्य नामाथोद्दिश्य यथार्थं विनियोजयेत्।
[2]श्वः करिष्य इति कृत्वा ब्राह्मणांश्च निमन्त्रयेत्॥
गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात् पथः।
मनसा वायुभूतेन विप्रेषु त्वं नियोजय॥
पूजयिष्यामि भोगेन एवं विप्रं नियोजयेत्।

---

१ ग पुस्तके, गत्वा तु विनिवेदनम्।
२ ग पुस्तके, श्वः करिष्ये इत्यादि नियोजयेदित्यन्तं पङ्क्तिचतुष्टयं नास्ति।

[१]पादप्रक्षालनं तेनैव प्रेतस्य हितकाम्यया॥ इति

न च वचनबलादेव तत्र तथेति वाच्यं वचनस्योक्तयुक्तिमूलत्वेनान्यथागतिसम्भवात् बलकल्पनाया अयोगात्।

किञ्च अशौचपतितश्राद्धस्य निरामिषभोजन-सकृद्भोजन-मैथुन-वर्जनादिकमङ्गमपि न स्यात्। उक्तयुक्तिः पुनः सर्वसिद्धिकरीति सैवोपासनीया।

किञ्च अशौचापगमे सुस्नात इत्यादि विष्ण्वादिवचनेन दशाहात् परमशौचाभावप्रतिपादनादन्यथा सन्ध्यादीनामकरणप्रसङ्गात्।

कालिकापुराणे,—

महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत्। इति।

लघुहारीतेन च

सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः।
तथैव काम्यं यत्कर्म्म वत्सरात् प्रथमादृते॥

इति काम्यकर्म्मणामेव निषेधात्। तत्रापि च विहितानां काम्यानां दानवृषोत्सर्गादीनां कर्त्तव्यतानियमात्तदङ्गानामधिवासादीनां वत्सराभ्यन्तरे सुतरामेव कर्त्तव्यत्वमायातम्। अन्यथा तुल्यन्यायाद्धोमादीनामप्यकरणप्रसङ्गः स्यात् केवलं वृषोत्सर्गमात्रं स्यात्। न च तथा, साङ्गस्यैव काम्यकर्म्मणः फलावश्यम्भावनियमात्। अतएव यागे रागादङ्गे वैधी प्रवृत्तिरित्युक्तं पञ्चमाध्याये। वृद्धिश्राद्धस्य तु वाचनिक एव निषेधः।

मत्स्यपुराणे,— वृद्धीष्टापूर्त्तयोग्यस्य गृहस्थस्य ततो भवेत्।

---

१ ग पुस्तके पादप्रक्षालनं तेन।

सपिण्डनानन्तरं हारीतः,—

विन्दते पितृलोकञ्च ततः श्राद्धं प्रवर्त्तते ।

उशनाः,—

नार्व्वाक् संवत्सराद्वृद्धिर्वृषोत्सर्गं विधीयते ।
सपिण्डीकरणादूर्द्ध्वं वृद्धिश्राद्धं विधीयते ॥

इत्यलं बहुना ।

## अथाधिवासः ।

पूर्वदिने सायंसमये स्वस्ति वाच्य संकल्पं कुर्य्यात् ।

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः प्रेतलोकपरित्यागपूर्वक स्वर्गलोकगमनकामनया श्वःकर्त्तव्ये वत्सतरीचतुष्टयसहितवृषोत्सर्गकर्म्मणि तदङ्गभूतं वृषवत्सतरीयूपानामधिवासनकर्म्म करिष्ये ।

ततः स्वयं वा वृत आचार्य्यो वा, रक्षोहनं पठित्वा वेतालांश्चेत्यादिना श्वेतसर्षपान् विकीर्य्य प्राङ्मुख उपविश्य कृतभूतशुद्धिमातृकान्यासाङ्गन्यासप्राणायामः सामान्यार्घ्यं विधाय ब्रह्माणं वास्तुपुरुषञ्च सम्पूज्य वेदीबहिरैशान्यां “अश्वस्तूपरोगो मृजङ्कस्तेत्यृग्भ्यां” गोष्ठावृषवत्सतरीरानीय “लाङ्गूलं परीरवदिति” भूमिं विशोध्य योगे योगे इति कुशानास्तीर्य्य[1] भद्रं कर्णेभिरिति भद्रपीठमारोप्य तत्र यूपं स्थापयेत् ।

ततोवृषवत्सतरीयूपान् आपोहिष्ठेति ऋक्त्रयेण द्रुपदादिवेति वेदादिमन्त्रचतुष्टयेन च स्नापयित्वा विष्णोरराटमिति सितवाससा

१ ख पुस्तके, कुशास्तरणं नास्ति ।

जलमपनीय ब्रह्मघोषेण वेद्यामानीय योगे योगे इति कुशाना-स्तीर्य्य विश्वतश्चक्षुरिति शय्यामास्तीर्य्य यूपव्रस्केति यूपं स्थापयेत्।

ततो यजमानो वृषपादौ गृहीत्वा पठेत्,—

धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः।
अस्त्वया मत्पितुः कार्य्यं कर्त्तव्यं वृषभेश्वर॥
अद्य प्राप्तोऽसि देवेश नमस्ते परमेश्वर।
अष्टमूर्त्तेरधिष्ठानं धर्म्मपाल नमोऽस्तु ते॥

ततो गुरुर्वेदीपूर्वभागे घटमारोप्य गणेशं विष्णुमम्बिकां नव-ग्रहान् दिक्पालांश्च सम्पूज्य घटान्तरे रुद्रमग्निं पूषणञ्चावाह्य विशेषतः पूजयेत्।

ततोऽहषवत्सतरीयूपानां कोऽसीति तैलहरिद्राम्।
त्वां गन्धर्व्वा, अंशुनाभे इति द्वाभ्यां गन्धम्।
श्रीश्च इति पुष्पं समिन्धोऽञ्जन्नित्यञ्जनम्।
रूपेणैव इत्यलक्तकम्।
युञ्जन्तीति गोरोचनाम्।
युवा सुवासा इति वस्त्रम्।
सिन्धोरिवेति सिन्दूरम्।
बृहस्पते इति छत्रं वातोवा इति व्यजनम्॥
धूरसीति धूपं, चन्द्रमा मनस इति दीपम्।
अक्षन्नमीमदन्त इति दूर्वाक्षतं, विश्वतश्चक्षुरिति शय्यां दत्वा

१ ख, आनाय्य।

दीर्घायुष्ट्वेति मार्जनं काण्डादिति चतुरः काण्डानारोप्य सूत्रामाणमिति सूत्रेण संवेष्टयेत्।

ततो वृषस्याङ्गे मन्त्रन्यासः।

चत्वारि शृङ्गेति शृङ्गे, नमस्ते रुद्र इति कर्णयोः।

याते रुद्र इति शिखायां, अस्मिन् महतीति शिरसि।

असंख्याता इति ललाटे, त्र्यम्बकमिति चक्षुषोः।

मानस्तोक इति नासिकायां, अवतत्य धनुरिति मुखे।

नीलग्रीवा इति कण्ठे, नमो वः किकिरेभ्य इति हृदये।

तामीशानमित्युदरे, हिरण्यगर्भ इति नाभौ।

नमस्त आयुधायाना इति बाह्वोः, प्रमुञ्च धन्वन् इति स्कन्धे।

वांतोवाय इति पुच्छे, गन्धद्वारामिति गुह्ये।

य एतावन्तश्चेति दिग्बन्धनं ततो रुद्राध्यायं पुरुषसूक्तञ्च पठित्वा वृषाय धर्मरूपिणे नम इति सम्पूज्य—

अधिवासितोऽसि देवेश सर्वलक्षणलक्षित।
यथासुखमिह स्थाने गोष्ठे तिष्ठ सुमित्रक॥

इति प्रणमेत्। ततः शिरोदेशे निद्राकलसं संस्थाप्य निद्रारूपिण्यै नम इति सम्पूज्य वस्त्रेणाच्छाद्य निद्रासूक्तं पठेत्। ततो वेदीबहिर्माषभक्तेन ॐ चां शां हीँ हूँ महादानवाधिपतये क्षेत्रपालाय एष माषभक्तबलिर्नम इति बलिं दद्यात्।

इत्यधिवासविधिः॥

अशौचान्ताद्द्वितीयदिने स्नातः कृतशान्तिः कृतनित्यक्रियो गोशालायां गोष्ठादौ वा गत्वा स्वस्ति वाच्य संकल्पं कुर्य्यात्।

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्ताहाद्वितीयेऽहनि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो प्रेतलोकपरित्यागपूर्वक-स्वर्गलोकगमनकामनया पारस्करगृह्योक्तविधिना वत्सतरीचतुष्टयसहितवृषोत्सर्गकर्म्माहं करिष्ये।

पाकयज्ञे स्वयं होता ब्रह्मैवैक ऋत्विगिति वचनात् स्वयमेव होता।

वृषवत्सतरीणामलङ्करणं गां वाससी च आचार्य्याय दद्यादिति छन्दोगपरिशिष्टवचनात् स्वयमशक्तावाचार्य्यं वृणुयात्। तदा स एव होता तदा ब्रह्माणं सदस्यञ्च वृणुयात्।

साधु भवानास्तामित्यादिना पाद्यादिना अभ्यर्च्य—

अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचाहान्ताद्वितीयेऽहनि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः प्रेतलोकपरित्यागपूर्वक—स्वर्गलोकगमनकामनया क्रियमाणे वृषोत्सर्गकर्म्मणि अमुकगोत्रं यजुर्वेदान्तर्गतामुकशाखाध्यायिनममुकशर्म्माणं भवन्तमाचार्य्यत्वेन वृणे। वृतोऽस्मीति आचार्य्यः।

तत इन्द्रघोषस्त्वेति वेदीमभ्युक्ष्य रक्षोहनं वेतालाश्चेति श्वेतसर्षपान् विकीर्य्य पञ्चगव्येन वेदीमभ्युक्ष्य प्राङ्मुख उपविश्य भूतशुद्धिं मातृकान्यासमङ्गन्यासं प्राणायामत्रयञ्च कृत्वा सामान्यार्घ्यं विधाय

गणेशं विघ्ननाशाय सम्पूज्य पूजयेद्धरिम्।
विष्णुं यो नार्च्चयेदादौ विफलं कर्म्म तद्भवेत्॥

इति प्रथमं घटे गणेशं सम्पूज्य विष्णुं च सर्वतोभद्रमण्डले घटे वा सम्पूज्य तत्रैव लक्ष्मीं नवग्रहांश्च सम्पूज्य दशदिक्षु घटेषु तेषामेकत्र वा रक्षार्थं दिक्पालान् सम्पूज्य होतव्यदेवानग्निं रुद्रं

सर्वं पशुपतिमुग्रमशनिं भवं महादेवमीशानं पूषणञ्च मण्डले घटे वा विशेषतः पूजयेत् ।

ततोऽग्निकोणे हस्तपरिमितं वालुकाभिरङ्गुलोच्छ्रायं स्थण्डिलं कृत्वा दर्भैः सम्मार्ज्य गोमयेनोपलिप्य कुशमूलेनोत्तराग्रामेकविंशत्यङ्गुलप्रमाणां रेखां कृत्वा तदुपरि सप्ताङ्गुलान्तरितं द्वादशाङ्गुलप्रमाणं प्रागग्रं विष्णुरुद्रेन्द्रदेवताकं रेखात्रयं कृत्वा दक्षिणहस्ताङ्गुष्ठतर्ज्जनीभ्यां रेखोत्कीर्णमृत्तिकामुद्धृत्य उत्तरस्यां दिशि क्षिपेत्। पञ्चगव्येन तीर्थोदकेन वा अभ्युक्ष्य स्थण्डिले कुशानास्तीर्य्य सूर्य्यकान्तादिसम्भूतमग्निमानीय क्रव्यादमग्निमिति क्रव्यादंशं दक्षिणस्यां दिशि त्यजेत् ॥

धेनुमुद्रया अमृतीकृत्य फडिति संरक्ष्य रं अग्नये नम इति सम्पूज्य जानुद्वयं भूमौ पातयित्वा ॐ इहैवायमिति स्थण्डिलोपरि त्रिः परिभ्राम्य ॐ भूर्भुवः स्वरिति मन्त्रेण आत्मनोऽभिमुखं कृत्वा अग्निं स्थापयेत् ।

चित् पिङ्गल हन हन दह दह पच पच सर्व्वज्ञा ज्ञापय स्वाहा । इत्यग्निं प्रज्वाल्य—

ॐ इहे दधि सव्योदतस्तिष्ठाम्यस्य सदन आसीद। इति दक्षिणावर्त्तेन गत्वा दक्षिणस्यां दिशि कुशानास्तीर्य्य ॐ निरस्तः पाप्मा हत तेन वयं द्विष्म इति मन्त्रेण कुशमेकं निरस्य—

ॐ इदमहं इहस्पते सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत् पृथिव्यै ।

इति मन्त्रेण तदुपरि ब्रह्माणमुत्तराभिमुखमुपवेश्य ॐ आब्रह्मण् इत्यभिमन्त्र्य सम्पूज्य च ब्राह्मणाभावे कुशमयं ब्राह्मणं

तत्र संस्थाप्य तेनैव पथा प्रत्यागत्य जलपूर्णं प्रणीतापात्रं आपो-हिष्ठेति संस्थाप्य सूत्रामाणमिति चमसौ 'जलेनापूर्य्य-देवस्य त्वेति मन्त्रेण षोड़शभिर्द्वादशभिर्वा दर्भैरगर्भैरीशानादितोऽग्रेण मूल-माच्छादयन् चतुर्द्दिक्षु परिस्तरेत्। तत उत्तरे पश्चिमान्तात् पूर्व्वान्तं यावत् कुशोपरि होमद्रव्यासादनम् ।

यथा,—पवित्रच्छेदनास्त्रयो दर्भाः पवित्रे द्वे प्रोक्षणीपात्रमाज्य-स्थाली चरुस्थालीद्वयं सम्मार्ज्जनकुशाः षट्, उपयमनकुशाः सप्त, पञ्च समिधः स्रुक्स्रुवौ आज्यं उदूखलमुसले सूर्पस्तण्डुलाः यवपिष्टं दुग्धं ब्रह्मदक्षिणा ।

इत्यादि स्थापयित्वा कुशपत्रद्वयं गृहीत्वा ॐ पवित्रे स्थो वैष्णव्यौ इति मन्त्रेण छेदनदर्भैः प्रादेशप्रमाणं पवित्रं छित्वा ॐ विष्णोर्मनसा पूते स्थ इत्यभ्युक्ष्य प्रोक्षणीपात्रे पवित्रं स्थापयित्वा प्रणीताजलेन प्रोक्षणीं पूरयित्वा वामहस्तेन प्रोक्षणीं संस्थाप्य तत् पवित्रं दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां धृत्वा तज्जलोत्तोलनरूपमुत्पवनं कृत्वा पवित्रं तत्रैव संस्थाप्य तज्जलेनासादितद्रव्याणि संप्रोक्ष्य स्ववामेऽग्न्यारस्थाने प्रोक्षणीं स्थापयेत् ।

अस्ताय फड़िति आज्यस्थालीं चरुस्थालीञ्च प्रोक्षण्युदकेन प्रोक्ष्य तत्राज्यं निक्षिप्य सूर्पोपरि उदूखलं संस्थाप्य पूर्व्वासादिततण्डुलान् ॐ अग्नये त्वा जुष्टं गृह्णामीति मुष्टिमेकां गृहीत्वा ॐ अग्नये त्वा जुष्टं निर्वपामीति' उदूखले निरूप्य ॐ अग्नये त्वा जुष्टं प्रोक्षामि इति प्रोक्षणीजलेनाभ्युक्षेत् ।

एवं ॐ रुद्राय त्वा ॐ शर्व्वाय त्वा ॐ पशुपतये त्वा ॐ उग्राय त्वा

ॐ अग्नये त्वा ॐ भवाय त्वा ॐ महादेवाय त्वा ॐ ईशानाय त्वा ॐ अग्नये स्विष्टिकृते त्वा,' तुष्णीञ्च वारद्वयं ग्रहण-निर्वपण-प्रोक्षणानि कृत्वा।

ॐ उदूखले मुसले इति मुसलेनावहत्य वातोवा इति सूर्पेण प्रस्फोट्य त्रिः प्रक्षाल्य एवं यवपिष्टस्यापि ॐ पूष्णे त्वा इत्येक-मुष्टेर्ग्रहणनिर्वपणप्रोक्षणानि कृत्वा "ॐ अग्नये स्विष्टिकृते त्वा" इति तथैवान्यमुष्टेर्ग्रहणादीनि कृत्वा चरुस्थालीद्वये द्वयं निधाय दुग्धं दत्वा अग्नेरुत्तरतो घृतमधिश्रित्य अग्निमध्ये चरुं तदुत्तरे पौष्णचरुञ्च प्रणीतोदकेनाज्येन चाभिषिच्य दर्भद्वयं सन्दीप्य आज्यस्य चरोश्च दक्षिणावर्त्तेन त्रिः परिभ्राम्य तं दर्भं तत्रैवाग्नौ क्षिपेत्।

पाणिभ्यां स्रुक्स्रुवौ गृहीत्वा अधोमुखौ कृत्वा वारत्रयं प्रताप्य सम्मार्जनकुशैरग्रान्मूलपर्य्यन्तं सम्मार्ज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य सम्मार्ज्जनकुशानग्नौ प्रक्षिप्य कुशोपरि स्रुक्स्रुवौ स्थापयेत्।

सुखिन्नमदग्धं चरुं स्थापयित्वा चरौ घृतस्रुवं दत्वा आज्य-चरुद्वयं चावतारयेत्। ततः प्रोक्षणीस्थपवित्रं वामहस्ताङ्गुष्ठा-नामिकाभ्यां मूले गृहीत्वा ऊर्द्धस्थितदक्षिणहस्तानामिकाङ्गुष्ठाभ्यां पवित्राग्रं गृहीत्वा "ॐ सवितुस्त्वा प्रसव" इति मन्त्रेण पवित्रमध्येन घृतस्योत्तोलनरूपमुत्पवनं वारत्रयं कृत्वा आज्यमवेक्षेत। प्रोक्षणी-पात्रस्थं जलञ्च ॐसवितुर्व इति मन्त्रेण तदुत्पूय तत्रैव पवित्रं स्थापयेत्। उपयमनकुशांश्च होमसमाप्तिं यावद्वामहस्ते कृत्वा उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तुष्णीमेव समिधः पञ्च जुहुयात्, मूलाग्रघृतसंप्लुताः।

तत उपविश्य दक्षिणजानु भूमौ पातयित्वा प्रोक्षण्याः सपवित्रेण जलेन दक्षिणादितः पर्य्युक्षेत्।

ॐ अदितेऽनुमन्यस्वेति दक्षिणस्यां प्रागग्रां जलधारां दद्यात् ।

ॐ अनुमतेऽनुमन्यस्वेति पश्चिमे उत्तराग्राम् ।

ॐ सरस्वत्यनुमन्यस्वेति उत्तरस्यां पूर्व्वाग्रां जलधारां दत्त्वा ॐ देव सवितः प्रसुवेति ईशानादि उदगन्तम् दक्षिणावर्त्तेन पर्य्युक्षेत् । ततस्तत् पवित्रं प्रणीतायां निधाय प्रोक्षणीपात्रं संस्रवार्थमग्नेरुत्तरे स्थापयेत् ।

तथाचापस्तम्बसूत्रम्,—

अदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनम् ।

अनुमतेऽनुमन्यस्वेति पश्चादुदीचीनम् ॥

सरस्वत्यनुमन्यस्वेत्युत्तरतः प्राचीनम् ।

देव सवितः प्रसुव इति समस्तमिति ॥

यद्यपि सर्व्वत्र आघाराज्यभागहोमानन्तरमेव प्रकृतहोमस्तथाप्यत्र-मध्ये गवां सुसमिद्धमग्निं कृत्वा आज्यं संस्कृत्य-इह रतिरिति षडाहुतीर्जुहोति ।

इति पारस्करवचने क्त्वाप्रत्ययस्यानन्तर्य्याभिधायकत्वात् आज्यं संस्कृत्येत्यस्य वैयर्थ्यप्रसङ्गाच्च आज्यसंस्कारानन्तरं प्रथमत एवेह रत्यादिहोमो नान्यहोम इति ।

न च पर्य्युक्षणमप्यादौ न स्यादिति वाच्यं, होमानन्तरस्यैव व्युदासादिति प्राचीनमतमेव प्रमाणमाधुनिकोक्तं हेयमिति ।

सूर्य्यनामानमग्निं कृत्वा आज्येन षडाहुतीर्जुहोतीति ।

ॐ इह रतिः स्वाहा इदमग्नये ।

ॐ इह रमध्वं स्वाहा इदमग्नये ।

ॐ इह धृतिः स्वाहा इदमग्नये।

ॐ इह स्वधृतिः स्वाहा इदमग्नये।

ॐ उपसृजन् धरुणं मात्रे धरुणो मातरन्धयन् स्वाहा। इदमग्नये।

ॐ रायस्पोषमस्मासु दीधरत् स्वाहा। इदमग्नये।

सर्व्वत्र संस्रवं प्रोक्षण्यां स्थापयेत्। ततो दक्षिणजानु भूमौ पातयित्वा ब्रह्मणोऽन्वारम्भपूर्वकमाज्येनाघाराज्यभागौ च जुहुयात्। तत्राघारौ प्रजापतिं मनसा ध्यात्वा—

वायुकोणादारभ्याग्निकोणपर्य्यन्तं घृतधारां दद्यात्।

ॐ प्रजापतये स्वाहा इदं प्रजापतये।

नैर्ऋतकोणादारभ्य ईशानकोणपर्य्यन्तं घृतधारां दद्यात्।

ॐ इन्द्राय स्वाहा इदमिन्द्राय।

अथाज्यभागौ।

ॐ अग्नये स्वाहा इदमग्नये। इत्यग्नेर्दक्षिणे पश्चिमादि प्रागन्तम्।
ॐ सोमाय स्वाहा इदं सोमाय। इत्यग्नेरुत्तरे प्रतीच्यादि प्रागन्तम्।
अवलग्नं हविःशेषं प्रोक्षणीपात्रे स्थापयेत्।

अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः, इत्यतिदेशात् शूलगवोक्तनवदेवताभ्यः पायसेनावदानविधिना जुहुयात्।

आज्यस्यैको होमपात्रे आघारः परिकीर्त्तितः।
यश्चरावाज्यसेकस्तु प्रत्याघारः स उच्यते॥
साज्ये हवनपात्रे च प्राग्दानमवदानकम्।
पुनस्तथैव यद्दानं तत् स्यात् प्रत्यवदानकम्॥
हव्ये हविषि यद्दानं घृताघारः स उच्यते।

चते चैरौ च यद्दानं चताभ्यङ्गः स उच्यते॥

इति गृह्यपरिशिष्टवचनादवदानविधिर्ज्ञेयः।

यथा जुह्वां घृतस्रुवं दत्वा चरौ चापरं तस्मान्मेक्षणेनावदानद्वयं गृहीत्वा जुह्वां घृतस्रुवेणाभिघार्य्य चरुञ्चाभिघारयेत्।

ॐ अग्नये स्वाहा इदमग्नये। इत्यग्नेर्मध्ये अन्वारम्भत्यागेन जुहु-यात्। एवं रुद्राय शर्व्वाय पशुपतये उग्राय अशनये भवाय महादेवाय ईशानाय।

अत्र चाशनिशब्द इकारान्त एव अकारान्तस्तु गडुरिकाप्रवाहेण।

अत्र काण्वशाखीयश्रुतिः प्रमाणम्,—

अग्निं हृदयेनाशनिं हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना शर्वमन्तस्नायुभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनि-ष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्यामिति।

तथैव पौष्णचरोरवदाय एकामाहुतिं जुहोति।

ॐ पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः।

पूषा वाजं सनोतु नः स्वाहा। इदं पूष्णे।

अस्यार्थः,—

पूषा देवता नोऽस्माकं गाः पशून् अन्वेतु अनुगच्छतु पालयतु पूषा अर्वतोऽश्वान् रक्षतु पूषा वाजमन्नं नोऽस्मभ्यं सनोतु ददातु इति।

अथ रौद्रात् पौष्णचरोश्च प्रत्येकमेकैकं भूयिष्ठमवदानं मेक्षणेन जुह्वां निधाय। ॐ अग्नये स्विष्टिकृते स्वाहा इदमग्नये स्विष्टिकृते।

तत आज्येन महाव्याहृतिहोमः।

ॐ भूः स्वाहा इदमग्नये। ॐ भुवः स्वाहा इदं वायवे। ॐ स्वः स्वाहा इदं सूर्य्याय। ॐ भूर्भुवः स्वः स्वाहा इदमग्निवायुसूर्य्येभ्यः। इति।

ततः सर्वप्रायश्चित्तहोमः।

ॐ त्वन्नोऽग्ने इदमग्नीवरुणाभ्यां। अग्नये वा सर्वत्र।

ॐ सत्वन्नोऽग्ने इदमग्निवरुणाभ्यां। ॐ अयाश्चाग्ने इदमग्नये।

ॐ ये ते शतं इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः।

ॐ उदुत्तमं इदं वरुणाय।

ॐ प्रजापतये स्वाहा इदं प्रजापतये।

इति होमं समाप्य अग्निमभ्यर्च्य पूर्णाहुतिं दत्वा ब्रह्मणे काञ्चनदक्षिणां दत्वा।

होतुर्वस्त्रयुगं कांस्यं काञ्चनञ्चैव दक्षिणाम्।

इति विष्णुवचनात् होमरूपाङ्गसमापनीं होमदक्षिणां दद्यात्।

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः प्रेतलोकपरित्यागपूर्वक-स्वर्गलोकगमनकामनया कर्त्तव्यवृषोत्सर्गाङ्गहोमकर्म्मणि ब्रह्मकर्म्मणः साङ्गतार्थं दक्षिणामिदं काञ्चनममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। एवं पूर्व्ववद्वाक्यं कृत्वा कर्त्तव्यवृषोत्सर्गाङ्गहोमकर्म्मणः साङ्गतार्थं दक्षिणामिदं वस्त्रयुगकांस्यकाञ्चनं तुभ्यमहं सम्प्रददे इति।

अत्राधुनिकाः,—

ब्रह्मकर्म्मणः कृताकृतावेक्षणरूपस्य दक्षिणायां मानाभावात्

तद्दक्षिणा पृथङ् नास्ति होमस्य तु कर्म्माङ्गत्वेऽपि होमरूपतापन्नस्य साङ्गस्यैव प्रधानाङ्गत्वात् वृद्धिश्राद्धवत् पृथग्दक्षिणेति सा च कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्। इत्याहुः। तदशुद्धम्।

ब्रह्मदक्षिणायां हयशीर्षपञ्चरात्रमेव प्रमाणं यथा,—

प्रणिपत्य ततो दद्याद्गुरवे दक्षिणां सुधीः।
सुवर्णसहितं पात्रं तिलैः पूर्णं सवस्त्रकम्॥
ब्रह्मणे कनकं दद्यात् मूर्त्तिपेभ्यस्तथैव गाः॥ इति।

तथा,—

होतुर्वस्त्रयुगं कांस्यं काञ्चनञ्चैव दक्षिणाम्।

इति वृषोत्सर्गाङ्गहोमकर्म्मणो विष्णुना विशिष्य दक्षिणाया विहितत्वेन होमस्य कर्म्माङ्गत्वेऽपि वृद्धिश्राद्धवत् वाचनिक्येव पृथग्दक्षिणा। अन्यथा अङ्गस्योपाङ्गापेक्षया प्राधान्येन दक्षिणा-प्रसङ्गेऽधिवासगणेशपूजादीनामपि दक्षिणाप्रसङ्गः स्यात्। नवा,— कर्म्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्। इत्यलं बहुना।

रुद्रान् जपित्वेति पारस्करे सामान्योपदेशेऽपि "श्रावयेद्रौद्रीश्च संहितां" इति छन्दोगपरिशिष्टवचनात् वृषवत्सतरीसमीपे समस्त-रुद्राध्यायजपं कुर्य्यात्। ततो वत्सतरीसहितं वृषमब्दैवतैर्मन्त्रैः कुशैः सोदकबिन्दुभिर्मार्ज्जयेत्।

अब्दैवतमन्त्रो यथा,—

शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणम्।
एतैरब्दैवतैर्मन्त्रैर्मार्जनं समुदाहृतम्॥
शन्न आपो धन्वन्याः शमनः सन्तु नूप्याः।

अन्नः समुद्रिया आपः अमनः सन्तु कूप्याः ॥

ॐ-द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।

पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥

आपोहिष्ठादि तृचत्रयम् ।

ॐ-ऋतञ्च सत्यञ्चाभीध्यात्तपसोऽध्यजायत ततो रात्र्यजायत

ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत ।

अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ

धाता यथापूर्व्वमकल्पयद्दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः ॥

यद्यपि पारस्करेऽङ्को नोक्तस्तथापि परिशिष्टवचनानुसारादङ्कनं यथा—

ततोऽरुणेन गन्धेन मानस्तोक इतीरयन् ।

वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समुल्लिखेत् ॥

वृषाह्यसीति सव्येऽस्य चक्राङ्कमपि दर्शयेत् ।

तप्तेन पश्चाद्यथा स्फुटौ तावेव कारयेत् ॥

अथैनं कलसस्थाभिरद्भिरेको वृषेण वा ।

सर्व्वौषधिसुगन्धाभिः स्नापयेद्दम्पिका अपि ॥

इत्यरुणगन्धेन दक्षिणपार्श्वे ॐ मानस्तोक इति कुशमूलेन त्रिशूलम् ।

वामपार्श्वे,—

ॐ वृषाह्यसि भानुना द्युमन्तं त्वा हवामहे 'पवमानः सुवर्दृशम् ।

इति मन्त्रेण चक्रं, चरणद्वयमूले विलिख्य पश्चात् तप्तलोहेन कर्म्मकारेण स्पष्टौ कारयेत् ।

ततः सुगन्धिभिरद्भिः सवत्सतरीकं वृषं स्नापयेत्।
शन्नोदेवी। आपोहिष्ठादिऋक्त्रयम्।
आपः शिवाः शिवतमाः शान्ताः शान्ततमाः।
तास्ते कृण्वन्तु भेषजम्।
ॐ या ओषधीः सोमराज्ञी र्धिष्ठिताः पृथिवीमनु।
बृहस्पतिप्रसूता
इति सर्व्वौषधिभिः।
ये तीर्थानीति तीर्थोदकेन स्नापयित्वा जलमपनीय—
पारस्करे तावलङ्कृत्येत्युपदेशात्।
वृषं वत्सतरीञ्च वस्त्रादिभिरलङ्कुर्य्यात्।
ॐ युवा सुवासा इति वस्त्रम्। गन्धद्वारामिति गन्धम्।
श्रीश्च ते इति पुष्पम्। धूरसीति धूपम्।
मनोज्योतिरिति दीपम्। समिन्धोऽञ्जन्नित्यञ्जनम्।
वातोवेति व्यजनम्। बृहस्पते इति छत्रम्।
सिन्धोरिवेति सिन्दूरम्। युञ्जन्तीति गोरोचनाम्।
चत्वारि शृङ्गेति सुवर्णशृङ्गम्। अचरपङ्क्तिरिति रजतखुरम्।
अयौ यस्याश्च इति ताम्रपृष्ठम्। नभ उदर्य्येणेति कांस्यक्रोड़म्।
नमो धृष्णवे चेति रजतत्रिशूलम्। इदं विष्णुरिति सुवर्णचक्रम्।
आज्ञापनेति दर्पणम्। वातोवेति चामरम्।
भद्रं कर्णेभिरिति प्रवालम्। नमोऽस्तु नीलग्रीवायेति सुवर्ण-
पट्टम्। मनोजवेति घण्टाम्। वृषाय दत्वा यथाशक्ति वत्सतरी-
रप्यलङ्कुर्य्यात्।

## अथ यूपारोपणम् ।

आचारादैशान्यां दिशि यूपमारोपयेत् । तत्र प्राचीनपद्धत्यनुसारेण तत्प्रक्रिया लिख्यते ।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । इति खनित्रग्रहणम् ।

ॐ आददेऽग्नेय्वाखेन प्राग्नामि बृहस्पतेर्मुखेन ।

इति गर्त्तं खनेत् ।

ॐ यवोऽसि यवयाऽस्मद्द्वेषो यवयाऽरातीः ।

इति अप्सु यवान् दद्यात् ।

ततो यवोदकेन यूपस्य— ॐ दिवे त्वेत्यग्रं, ॐ अन्तरीक्षाय त्वेति मध्यं, ॐपृथिव्यै त्वेति मूलं प्रोक्षयेत् ।

ॐ शुन्धन्तां लोकाः पितृषदना इति यवोदकं गर्त्ते क्षिपेत् ।

ॐ पितृषदनमसीति प्रागग्रान् दर्भान् गर्त्ते स्तृणुयात् ।

ॐ अग्रेणीरसि स्वावेश उन्नेतृणामेतस्य वित्तादधीत्वा स्थास्यति ।

इति गर्त्तसमीपे यूपमानयेत् ।

ॐ देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधिभ्यः ।

इति मधुना घृतेनाभ्यञ्जयात् ।

ॐ दिवमग्रेणास्पृक्ष आन्तरीक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः । इति यूपस्योच्छ्रितं कुर्य्यात् ।

ॐ याते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमाव भारि भूरि ॥

इति गर्त्ते क्षिपेत् ।

ॐ अग्निर्वनित्वा च्चवनि रायस्पोषवनि पर्य्यूहामि।

इति घृतप्रक्षेपः।

ॐअग्निंदृंह, चत्रंदृंहायुर्दृंह प्रजांदृंह। इति दण्डेन दृढ़ीकरणम्।

ततो यूप स्पृष्ट्वा—

ॐ विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे।

इन्द्रस्य युज्य सखा।

इति जपेत्।

ॐ यदाबध्नन्दाचायणा हिरण्यं शतानीकाय सुमनस्यमानाः।

तन्म आबध्नामि शतशारदाया युष्मान् जरदष्टिर्यथासम्।

इति वृषं यूपे वध्नीयात्। उपयूपेषु वत्सतरीश्च।

अत्र केचित्,—

वृषस्य दक्षिणे कर्णे-गायत्रीं ऋतञ्च सत्यञ्च इत्याद्यघमर्षणं यद्देवा देवहेलनमित्यादि कुष्माण्डीसंज्ञकमन्त्रत्रयञ्च जपन्ति।

तच्च पारस्करेण रुद्रजपमात्राभ्यनुज्ञानादप्रमाणकमिति।

ततो दधिलाञ्छितविग्रहान् वस्त्राच्छादितांश्च सर्वान् कृत्वा तिलकुसुमजलान्यादाय वत्सतरीचतुष्टयसहितं वृषमुत्सृजेत्।

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्ताहादितीयेऽहनि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणः प्रेतलोकपरित्यागपूर्व्वकस्वर्गलोकगमनकामनया स्वर्णशृङ्गाद्यलङ्कृतं वासोयुगाच्छादितं दधिलाञ्छितविग्रहं रुद्रदैवतं वृषम्—

एनं युवानं पतिं वो ददामि तेन क्रीड़न्तीश्चरथ प्रियेण।

मानः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम॥

इति मन्त्रेणैव वाक्यप्रविष्टेनोत्सृजेत्[१]।

अथ पारस्करे एतयैवोत्सृजेरन्निति एतयैव च ऋचा नान्यवाक्येनेत्येवकारार्थवशात् वाक्यभेदकल्पनागौरवाच्च उत्सृजेरन्निति बहुवचनाच्च रथकारन्यायात् शूद्रेणाप्ययं मन्त्रः पठनीय एवेति प्रागेव विवृतम्।

न च मासपक्षतिथ्यादीनामप्युल्लेखो नास्तीति वाच्यम्,—

मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः।
उल्लेखनमकुर्व्वाणो न तस्य फलभाग् भवेत्॥

इति ब्रह्माण्डपुराणवचनात्।

फलांशमभिसन्धाय प्रदद्यात् श्रद्धयान्वितः।

इति गोतमवचनाच्च मासपक्षतिथ्यादीनामुद्देश्यगतफलस्य चोल्लेखनियमात्। ततश्च उत्सर्गमन्त्रे एनमित्यनेन निर्द्दिष्टस्य वृषस्य विशेषणतया तद्दैवताद्युल्लेखं कृत्वा प्रोत्सर्गप्रतिपादिकया ऋचैव वाक्यं समापनीयं न स्वकल्पितवाक्येनोत्सर्ग इति पारस्करसूत्रार्थः।

ऋगर्थस्त्वयम्।

हे वत्सतर्य्यो वो युष्माकमेनमुपस्थितं पतिं ददामि त्यजामि स्वलध्वंसविषयं करोमि तेन वृषेण पत्या सह क्रीड़न्तीः खेलन्त्यो यूयं चरथ भ्रमथ क्रीड़न्तीरिति प्रथमायां द्वितीया छन्दसि यूयमपि नोऽस्माकं माभा असत्खलविषयात्मका इत्यर्थः। एतेन वत्सतरीणामुत्सर्गः प्रतिपादितः। मयोत्सृष्टास्त्वया सहेति लिखिष्यमाणवचनाच्च।

---

१ क पुस्तके, उत्सर्गः।

फलमाह पंत्तैव साम्नं स्वार्थे अन् जनुर्जन्म मम्नजन्मना विशिष्टे-नेति विशेषणे तृतीया सन्नजन्मभाविना रायो धनस्य पोषेण पुष्ट्या समृद्ध्या इषा अन्नेन च वयं सुभगाः सन्तः सं सम्यक् मदेम पुष्टा भवेम इषु इच्छायां इष्यते सर्व्वैरिति कर्म्मणि क्विप् छान्दसः।

मध्यस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेण।

इति पारस्करवचनात् सवत्सतरीकं वृषमभिमन्त्रयेत्।

ॐ समुद्रोऽसि नभस्वानार्द्रदानुःशम्भूर्मयोभूरभिमावाहि स्वाहा।

मारुतोऽसि मरुतां गणः शम्भूर्मयोभूरभिमावाहि स्वाहा।

अवस्युरसि दूरस्वान् शम्भूर्मयोभूरभिमावाहि स्वाहा।

यास्ते अग्ने सूर्य्ये रुचो दिवमातन्वन्ति रश्मिभिः॥

ताभि र्नो अद्य सर्व्वाभीरुचे जनाय नस्कृधि।

या वो देवाः सूर्य्ये रुचो गोष्वश्वेषु या रुचः।

इन्द्राग्नी ताभिः सर्व्वाभी रुचन्नो धत्त बृहस्पतेः॥

रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।

रुचं वैश्येषु शूद्रेषु मयि धेहि रुचारुचम्॥

तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।

अहेड़मानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः।

स्वर्णघर्म्मः स्वाहा, स्वर्णार्कः स्वाहा, स्वर्णशुक्रः स्वाहा, स्वर्णज्योतिः स्वाहा, स्वर्णसूर्य्यः स्वाहा॥

इत्यनुवाकशेषः।

अथ प्रचालयेत् यथेष्टं यूथं पर्य्यटत।

इति छन्दोगपरिशिष्टवचनादैशान्यां दिशि सवत्सरीकं वृषं किञ्चिच्चालयित्वा वृषं प्रदक्षिणीकृत्य पठेत्,—

ॐ धर्म्मोऽसि त्वं चतुष्पादस्तस्ते प्रियास्त्विमाः।
चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह॥
देवानाञ्च पितृणाञ्च मनुष्याणाञ्च योषितः।
भूतानां तृप्तिजननास्त्वया सार्द्धं व्रजन्त्विमाः॥
नमो ब्रह्मण्यदेवेश पितृभूतर्षिपोषक।
त्वयि मुक्तेऽक्षया लोका मम सन्तु निरामयाः॥
मा मे ऋणोऽस्तु दैवोऽथ पैत्रो भौतोऽथ मानुषः।
धर्म्मस्त्वं त्वत्प्रपन्नस्य या गतिः साऽस्तु मे ध्रुवा॥
यावन्ति सन्ति लोमानि तव तासाञ्च गोपते।
तावद्वर्षसहस्राणि स्वर्गे वासोऽस्तु मे पितुः॥
मोचितोऽसि मया नाथ स्वच्छन्दा गतिरस्तु ते।
मत्पितुः स्वर्गसिद्ध्यर्थं तरिस्त्वं भवसागरे॥
[1]न खादेः परशस्यानि नाक्रामेर्गर्भिणीश्च गाम्।

इति वृषं श्रावयेत्।

तत आचाराद्यस्य वृषस्योत्सर्गस्तस्य पुच्छेन तर्पणम्। सतिल-मोटकवृषपुच्छमादाय कृतापसव्यो दक्षिणामुखः—

ॐ अमुकसगोत्र प्रेतामुकशर्म्मन्नेतत्ते एतदुत्सृष्टवृषपुच्छ-गलिततिलोदकमुपतिष्ठताम्॥

---

१ क पुस्तके, न खादेरिति, वृषश्रावणं नास्ति।

ततः— ॐ स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये ।
पितृपक्षाश्च ये केचिद्ये चान्ये मातृपक्षकाः ॥
गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्ज्जिताः ॥
वृषोत्सर्गेण ते सर्व्वे लभन्तां प्रीतिमुत्तमाम् ।
दद्यादनेन मन्त्रेण तिलाक्षतयुतं जलम् ॥

इत्यग्निपुराणवचनाज्जलाञ्जलित्रयं दद्यात् ।

वृषोत्सर्गस्य गोयज्ञातिदेशात् वृषसमानोऽन्यस्तथाभरणयुक्तो गौर्दक्षिणा देया ।

तथा गोयज्ञे पारस्करः,—

तस्य तुल्यवया गौर्दक्षिणेति ।°

तथा च विष्णुसंहितानाम्ना वचनं पठन्ति ।

ब्राह्मणस्य वरो गौश्च क्षत्रो ग्रामस्य भूभुजः ।
अश्वो विप्रस्तु सपदं पुराणग्रतमन्तिके ॥

ॐ अद्येत्यादि अमुकसगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्ताहाद्द्वितीयेऽहनि अमुकसगोत्रस्य प्रेतस्यामुकशर्म्मणः प्रेतलोकपरित्यागपूर्व्वक-स्वर्गलोकगमनकामनया पारस्करविधिना कृतैतद्वृषोत्सर्गकर्म्मणः प्रतिष्ठार्थं दक्षिणामिमां वृषतुल्यवयस्कामलङ्कृतां गां वृषतुल्यवयस्कालङ्कृतगवीमूल्यं वा विष्णुदैवतममुकगोत्रायामुकशर्म्मणे तुभ्यमहं सम्प्रददे ।

अत्र वृषवत्सतरीणामलङ्कारं गां वाससी चाचार्य्याय दद्यादिति छन्दोगपरिशिष्टवचनाद्दक्षिणां गामाचार्य्यायैव दद्यात् ।

विष्णुः,—

अयस्कारस्य दातव्यं भोजनं मनसेप्सितम्।

भोजनं बहुसर्पिष्कं ब्राह्मणांश्चैव भोजयेत्॥

व्यासः,—

क्रियमाणे वृषोत्सर्गे लोमदाहोऽभिजायते।

वृषभः पीड्यते तेन शाम्यते द्विजभोजनात्॥

पूर्व्ववद्वाक्यं कृत्वा कृतैतद्वृषोत्सर्गकर्म्मणि एतदुत्सृष्टवृषलोमदाहजनितपापक्षयकामो भोज्यान्येतानि बहुसर्पिष्काणि ब्राह्मणेभ्यः सम्प्रददे। ततस्तु दक्षिणां काञ्चनमूल्यं दद्यात्।

ॐ यज्ञेन यज्ञमिति देवान् विसृज्य अच्छिद्रं कुर्य्यात्।

आचाराद्गीत-वाद्य-लाजप्रक्षेपं कृत्वा गृहे समागन्तव्यम्।

इति वृषोत्सर्गपद्धतिः॥

अथ वृषोत्सर्गानन्तरं मत्स्यपुराणोक्तक्रमानुरोधात् कपिलादानम्।

सवत्सां कपिलां स्वर्णशृङ्गाद्यलङ्कृतां पाद्यादिभिः सम्पूज्य धेन्वङ्गाधिष्ठातृदेवताभ्यो नमः, इति पुष्पाञ्जलिं दत्त्वा कृताञ्जलिः पठेत्—

या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता।

धेनुरूपेण सा देवी मम पापं व्यपोहतु॥

देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया[१]।

---

[१] ख पुस्तके, शङ्करस्य च या प्रिया।

धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।
चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ।
या लक्ष्मीः सर्व्वभूतानां सा धेनुर्वरदाऽस्तु मे ।
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ॥
सर्व्वपापहरा धेनुः सर्व्वशान्तिं प्रयच्छतु ।
सर्व्वलोकमयीं दोग्ध्रीं सर्व्वदेवमयीं तथा ॥
सर्व्वलोकहितार्थाय सर्व्वलोकभवाय च ।
प्रयच्छामि महाभागामक्षयाय शुभाय ताम् ॥

इति पठित्वा धेनुं देवतां सम्प्रदानब्राह्मणमपि पाद्यादिभिः सम्पूज्य इमां धेनुं ते ददानीति ब्राह्मणहस्ते जलं दत्वा ददस्वेति तेनोक्ते जलेन धेनुं प्रोक्ष्य वस्त्रेणाच्छाद्य पुच्छं धृत्वा—

ॐ अद्येत्यादि अमुकसगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्ता-द्वाद्वितीयेऽहनि अमुकसगोत्रस्य प्रेतस्यामुकशर्म्मण एतद्धेनुलोमसम्मित-वत्सरावच्छिन्नस्वर्गवासासप्तमकुलतारणकामोऽमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय इमां कपिलाधेनुं सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं कांस्योपदोहामादर्शललाटां घण्टाग्रीवां चामरपुच्छां गन्धाद्यर्च्चितां पयस्विनीं तुभ्यमहं सम्प्रददे । पुच्छे गृहीत्वा स्वस्तीति ग्रहीता वदेत् ।

ॐ अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकशर्म्मणो मरणाशौचान्ता-द्वितीयेऽहनि अमुकसगोत्रस्य प्रेतस्यामुकशर्म्मण एतत्कपिलाधेनु-

लोमसम्मितवत्सरावच्छिन्नस्वर्गवासासप्तमकुलतारणकामिनया कृते-तत्कपिलाधेनुदानप्रतिष्ठार्थं दक्षिणामिदं काञ्चनमग्निदैवतममुक-गोत्रायामुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

ततो गृहीता स्वस्तीत्युक्का काञ्चनं स्पृष्ट्वा गायत्रीं कामस्तुतिञ्च पठित्वा कपिलाधेनुरियं रुद्रदेवताकेति वदेत्।

ततो दाता प्रदक्षिणीकृत्य पठेत्—

यावन्ति तव लोमानि शरीरे सम्भवन्ति हि।
तावद्वर्षसहस्राणि स्वर्गे वासोऽस्तु मे पितुः॥

ततो घासग्रासदानम्—

सुरभे त्वं जगन्मातर्देवानाममृतप्रदे।
गृहाण वरदे ग्रासमीप्सितार्थं प्रदेहि मे॥

पूर्व्वलिखितशिवपुराणवचनात्—

ॐ अद्येत्यादि एतत्कपिलाधेनुलोमकूपसमसंख्यवर्षसहस्रा-वच्छिन्नस्वर्गलोकवास-तदुत्तरविपुलकुलजन्मकाम इमां कपिलाधेनुं सौवर्णशृङ्गीमित्यादि वाक्यं वा।

कपिलाभावे तदितरसालङ्कृतधेनुदाने तु—

ॐ अद्येत्यादि एतद्धेनुलोमसम्मितवत्सरावच्छिन्नस्वर्गवासकाम इमां धेनुं सौवर्णशृङ्गीमित्यादि सर्व्वं पूर्व्ववत्।

---

वापीकूपतड़ागानां प्रतिष्ठा सर्व्वसम्मता।
यथामति विचार्य्येयं विशेषेण विलिख्यते॥

वेदबोधितत्यागस्य यागो दानं होमो वा इति त्रितयान्यतर-नियमात् सर्व्वसत्वसम्प्रदानककूपवाप्याद्युत्सर्गस्य—

मनसा पात्रमुद्दिश्य भूमौ तोयं समुत्सृजेत्।
विद्यते सागरस्यान्तो न तद्दानस्य विद्यते॥

इत्यग्निपुराणवचनात्,—

प्रकृष्टचेतनमनुष्याद्यपेक्षया पश्चात् स्वीकारसम्भवात् उद्देश्यगतस्वा-मित्वजनकत्यागो दानमिति लक्षणव्यापनाद्दानत्वं। निकृष्टचेतनमत्स्य-पक्ष्याद्यपेक्षया तु वेदबोधितत्यागस्य तस्येदमित्यारोपज्ञानविषयो देवतेति निकृष्टचेतनानां देवतात्वावगमात् देवतोद्देशेन द्रव्यत्यागो याग इति यागलक्षणव्यापनादस्ति च यागत्वम्। यथा श्राद्धस्य पित्रुद्देश्यकतया यागत्वं ब्राह्मणसम्प्रदानकतया च दानत्वमित्युभय-रूपता भ्रान्तिज्ञानस्येव न्यायनयेऽंशभेदात्[१] प्रामाण्याप्रामाण्यम्।

यथा च गुरुमतेऽनुमानस्य मेयांशे परोक्षतामिति मात्रंशे च प्रत्यक्षतेति। अतएवोभयप्रयोगोऽपि दृश्यते।

यथा हयशीर्षे,—

नास्ति तोयसमं दानं त्रैलोक्ये सचराचरे।
तस्मात् सर्व्वप्रयत्नेन जलदानं समाचरेत्॥
वापीकूपतड़ागाद्यमतो दद्यात् स्वशक्तितः।
वित्तानुसारतः प्राज्ञः प्रपाश्चैव प्रवर्त्तयेत्॥

१ ख पुस्तके, स्वसंभेदात्।

प्रत्येकं पूरयित्वा तु निदाघे वारिणा घटम्।
जलदानन्तु कुर्व्वीत सर्व्वकामसमृद्धिदम्॥
प्रपायास्तु दानत्वं सुतरामेव।

मत्स्यपुराणे यागपदप्रयोगो यथा,—

एतान् महाराज विशेषधर्म्मान्
करोति योर्व्वामथ शुद्धबुद्धिः।
स याति रुद्रालयमाशु पूतः
कल्पाननेकान् दिवि मोदते च॥
अनेकलोकान् स महर्भुवादीन्
भुक्त्वा परार्द्धद्वयमङ्गनाभिः।
सहैव विष्णोः परमं पदं तत्
प्रयाति तद्यागबलेन भूयः॥

उर्व्वामेतान् विशेषधर्म्महेतुभूतान् तड़ागादीन् यः करोति तेषां तड़ागादीनां यागबलेन विष्णोः परमं पदं प्रयातीत्यर्थः। एवं सेतारामादिदानस्यापि यागदानोभयरूपतेति ध्येयम्।

जलाशयस्य कूपवापीपुष्करिणीतड़ागनदीभेदात् पञ्चविधत्वम्।

यथा हयशीर्षपञ्चरात्रे वरुणप्रतिमालक्षणकथने,—

हेमजं रौप्यजं वापि रत्नजं वा प्रकल्पयेत्।
वरुणं तस्य संक्षेपाल्लक्षणं कथयामि ते॥
अङ्गुलं निक्षिपेत् कूपे वाप्यां तदत्र्यङ्गुलम्।
पुष्करिण्यां क्षिपेद्देवं वरुणं चतुरङ्गुलम्॥
पञ्चाङ्गुलं तड़ागेऽपि नद्यामथ षड़ङ्गुलम्।

कूपादिलक्षणमुक्तं कपिलपञ्चरात्रे,—

पञ्चाशद्भिर्भवेत्कूपः शतहस्ता तु वापिका।
पुष्करिण्यस्तदूर्द्धन्तु यावद्धस्तशतद्वयम् ॥
तड़ागोऽष्टशतान्तःस्थो नदी च स्यात्तदूर्द्धतः।

पञ्चाशद्भिरिति पञ्चाशद्धस्तपर्य्यन्तं कूपः स च सद्वारको निर्द्वारकश्चेति। वापी च पञ्चाशदूर्द्धं शतहस्तपर्य्यन्ता। एषाञ्च संख्यातारतम्येन गाम्भीर्य्यतारतम्येन च फलस्यापि तारतम्यं बोद्धव्यम्।

अत्र केचित्,—

स्वस्य जलाशयजलोपभोगो विरुद्धः त्यक्तस्य पुनः स्वीकारानर्हत्वात्, न चैकस्य एकक्रियायां दानकर्त्तृत्वं सम्प्रदानत्वञ्च सम्भवति। अतएव सत्रयागे यष्टॄणामेव स्वेषामृत्विक्त्वेन नास्ति दक्षिणेत्याहुः। तन्न,— त्यक्तजलस्यापि नद्यादिजलवदौपादानिकत्वाविरोधात्।

भोजयित्वा द्विजान् सम्यक् तोयमुत्सर्जयेत्ततः।
सर्व्वभूतान् समुद्दिश्य इति वाचं समुच्चरेत् ॥

इति हयशीर्षे असङ्कुचितसर्व्वपदबलात् स्वस्यापि त्यागोद्देश्यवर्गान्तर्भावाच्च।

एकस्यापि प्रकारभेदेन भिन्नत्वात् सम्प्रदातृत्वसम्प्रदानत्वयोरविरोधाच्च अहन्त्वप्रकारेण सम्प्रदातृत्वं सर्व्वभूतत्वप्रकारेण च सम्प्रदानत्वम्। यथा सन्न्यासिनामात्मश्राद्धे एकस्यैव एतच्छरीराधिष्ठायकत्वप्रकारेण दातृत्वं पारलौकिकशरीरान्तराधिष्ठायकत्वप्रकारेणोद्देश्यत्वमपीति नास्ति विरोधः। सत्रयागे तु स्वेषामेव ऋत्विजां सम्प्रदातृत्वसम्प्रदानत्वयोः प्रकाराभेदात् दक्षिणाभावो युज्यत एव।

अतएव श्राद्धविवेके,—

हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः।
तस्मात् पणङ्काकिनीं वा फलं पुष्पमथापि वा॥
प्रदद्यात् दक्षिणां श्राद्धे तया स सफलो भवेत्।

इति बृहस्पतिवचने पुष्पादीनामानत्यर्थलाभावात् सत्त्वेऽप्यति-देशागतदृष्टार्थदक्षिणाया बाधो नादृष्टार्थाया दक्षिणाया इत्युक्तम्।

न च तिरश्चां प्रकृष्टचेतनाभावात् बधिरान्धमूकपङ्गूनां श्रवण-वीक्षणोच्चारणप्रचरणविरहादिन्द्रादिदेवतानाञ्च स्वस्यैव[१] त्यागोद्देश्य-त्वासम्भवात् यागानधिकार इति तिर्य्यगधिकरणविरोध इति वाच्यम्।

साकाराणामिन्द्रादीनामधिकारे निरूपयितव्ये मन्त्रमयीणां देवतानामुद्देश्यत्वारोपेण विरोधगन्धाभावात् तेषां यागेऽधिकार-सम्भवात् गङ्गास्नानदानादावधिकारप्रसङ्गाच्च।

वस्तुतस्तु वर्णाश्रमवतामेव कर्म्माधिकारनियमात् तदभावेन सुरेशादीनां तिरश्चामपि सर्व्वकर्म्मानधिकार इति तिर्य्यगधिकरण-सिद्धान्तः।

न च पुराणादाविन्द्रादीनामश्वमेधादिवर्णनविरोध इति वाच्यम्। श्रीरामचन्द्रादिवत् लोकप्रवर्त्तकतया तेषां तदनुष्ठानोपपत्तेः।

अतएव भगवद्गीतायाम्,—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते॥

इति स्वजलाशयजलोपभोगो न विरुध्यते।

---

१ ख पुस्तके, अस्यैव।

एवं सेत्वारामादीनामपीति।

प्रकृतमनुसरामः॥

कूपादिप्रतिष्ठाफलमाह हयग्रीर्षे,—

एवं विधिं विनिवर्त्त्य नृत्यगीतादि कारयेत्।
एवं कृते फलं यत्तु तन्निबोध सुरोत्तम॥
सर्व्वकामसुसम्पूर्णं वैदूर्य्यमणिभूषितम्।
सौवर्णं कामगं दिव्यं दिव्यस्त्रीशतसङ्कुलम्॥
विमानं ब्रह्मलोके तु प्राप्नुयात् कूपकारकः।
एवं वाप्यादिकर्त्तॄणां फलं स्यादुत्तरोत्तरम्॥
कूपवापीतड़ागानां यः कर्त्ता नष्टकिल्बिषः।
नासौ वैवस्वतपुरं याति भूतनिषेवितम्॥
ब्रह्मलोके वसेत् ब्रह्मन् यावन्मन्वन्तरं नरः॥
तदन्ते पृथिवीपालो जायते वा द्विजोत्तमः।
सर्व्वलक्षणसम्पन्नः सर्व्वैश्वर्य्यसमन्वितः॥

कूपकारकः एवंविधानेन कूपदानकारक इत्यर्थः। एवं परत्रापि।

कूपादिप्रतिष्ठास्वरूपमाह हयग्रीर्षे,—

अब्देहं वरुणं बिद्धि नित्यं नारायणात्मकम्।
वरुणस्य प्रतिष्ठा या सैवापां कीर्त्त्यतेऽनघ॥

तथा तत्रैव—

भोजयित्वा द्विजान् सम्यक् तोयमुत्सर्ज्जयेत्ततः।
सर्व्वभूतान् समुद्दिश्य इति वाचं समुच्चरेत्॥

ततो वरुणप्रतिमास्थापनानन्तरं तोयं तोयाशयं समुत्सृजेदित्यर्थः । कूपादिजलाशयानामेव दाने तत्तत्फलश्रवणात् ।

कूपवापीतड़ागाद्यमतो दद्यात् स्वशक्तितः ।

इति पूर्व्वलिखितविधिवाक्यबलाच्च ।

सर्व्वेष्वेतेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः ।
फलार्थिभिस्त्वप्रतिष्ठं यस्मान्निष्फलमुच्यते ॥

इति वक्ष्यमाणवचनाच्च ।

अन्यथा तन्मात्रजलोत्सर्गे अन्येषामनुत्सर्गप्रसङ्गात् । तेन—

अप्रतिष्ठन्तु यत्तोयं तत्तोयं मूत्रवत् स्मृतम् ।

इति कपिलपञ्चरात्रवचनस्वरसात् वरुणप्रतिमास्थापनकृतजलशुद्धिपूर्व्वकजलाशयोत्सर्गः कूपादिप्रतिष्ठापदवाच्यः ।

एतेन मत्स्यपुराणाद्युक्तफलं वरुणयागस्यैव जलाशयदानस्य तु पृथगेव फलमिति यत् केनचिदुक्तं तन्निरस्तम् ।

यागस्यैव तत्फलत्वे अन्यदा वरुणयागानुष्ठानेऽपि तत्फलं स्यात् । जलाशयाधिकरणकवरुणप्रतिमास्थापनं जलाशयकरणं विना न घटते इति चेत् नद्यादौ परकृततड़ागादौ वा तत्सम्भवे तत्फलप्रसङ्गः स्यात् । तस्मात् पूर्व्वलिखितहयशीर्षादिवचनात् वरुणयागो जलाशयोत्सर्गस्याङ्गं फलमपि तस्यैवेति ।

तर्हि प्रतिष्ठाभावे जलाशयकरणस्य फलाभावप्रसङ्ग इति चेन्न अविधिकृतसुवर्णादिदानवत्तादृशं[1] वैधफलं नास्त्येव किन्तु तदद्यत्-

---

१ ख पुस्तके, दानकृततादृशम् ।

किञ्चित् साधारणं फलं विद्यत एव इति न विवादः । एवं सेत्वारामादिप्रतिष्ठायामपि तद्दानस्यैव फलं न लङ्गभूतयागस्येति ध्येयम् ।

वरुणप्रतिमालक्षणमाह हयग्रीर्वे,—

हेमजं रौप्यजं वापि रत्नजं वा प्रकल्पयेत् ।
वरुणं तस्य सङ्क्षेपात् लक्षणं कथयामि ते ॥
द्व्यङ्गुलं निक्षिपेत् कूपे वाप्यां तद्दत्त त्र्यङ्गुलम् ।
पुष्करिण्यां क्षिपेद्देवं वरुणं चतुरङ्गुलम् ॥
पञ्चाङ्गुलं तड़ागेऽपि नद्यास्त्वाथ षड़ङ्गुलम् ।
द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम् ॥
वामेन नागपाशन्तु धारयन्तं सुभोगिनम् ।
मौलिनं वा महाभागं कारयेत् यादसां पतिम् ॥
वामे तु कारयेद्दृद्धिं दक्षिणे पुष्करं शुभम् ।
नागैर्नदीभिर्यादोभिः समुद्रैः परिवारितम् ॥

फणवत्पक्षे अभयनागपाशयुक्तहस्तद्वयं मौलिनं मुकुटालङ्कृतमस्तकं तत्पक्षे निधिपद्मयुक्तहस्तद्वयमित्यर्थः ।

मत्स्यपुराणे,—

सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ ।
ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः ॥

कपिलपञ्चरात्रे,—

नदी तु राजती ज्ञेया समुद्रः स्वर्णनिर्म्मितः ।
अनन्ताद्यष्टनागास्तु अष्टधातुविनिर्म्मिताः ॥

धातवोऽष्टावन्यत्रोक्ताः।

सुवर्णं रजतं ताम्रं कांस्यं पित्तलमेव च।
रङ्गसीसकलौहानि धातवोऽष्टौ प्रकीर्त्तिताः॥

यूपलक्षणमुक्तं हयशीर्षे,—

चतुरस्रमथाष्टास्रं वर्त्तुलं वा सुवर्त्तितम्।
आराध्यदेवतालिङ्गसूचितं मानसम्मितम्॥
दशहस्तं न्यसेत् कूपे यूपं यज्ञीयवृक्षजम्।
मूले हैमान् फलान् न्यस्त्वा वाप्यां पञ्चदशान्वितम्॥
पुष्करिण्यां न्यसेद्यूपं विंशहस्तं सुरेश्वर।
पञ्चविंशकरं यूपं तड़ागे विनिवेशयेत्॥
अतिगम्भीरविस्तारयुक्ते विप्र जलाशये।
यथाप्रमाणंशोभन्तु यूपं सम्यङ्निवेशयेत्॥
जलमध्येऽथवा यागमण्डपस्याजिरे गुरुः।
यूपव्रस्केति मन्त्रेण स्थाप्य वस्त्रेण वेष्टयेत्॥
वैजयन्तीं सितां रम्यां यूपोपरि निवेशयेत्।

तथा,—

लौहजं शैलजं वापि कारयेत् षोड़शाङ्गुलम्।
अष्टारं द्वादशारं वा चक्रं मूर्त्तिसमन्वितम्[१]॥
नारसिंहेन रौद्रेण विश्वरूपेण वा पुनः।
ध्वजवंशस्य कर्त्तव्यो निर्व्रणः शोभनो दृढ़ः॥

---

१ ख पुस्तके, मूर्त्तिशतान्वितम्।

प्रतिष्ठाकालमाह तत्रैव,—

उत्तरायणे श्रिते भानौ शुक्लपक्षे सुरेश्वर ।
कृष्णपक्षान्तिमत्र्यंशादृते सुरगणार्च्चित ॥
शुक्लस्याद्यं परित्यज्य प्रतिष्ठां कारयेद्बुधः ।

शुक्लस्याद्यं त्र्यंशमित्यर्थः ।

तथा,—

प्रतिपच्च द्वितीया च तृतीया पञ्चमी तथा ।
सप्तमी दशमी चैव द्वादशी च त्रयोदशी ॥
अष्टमी पौर्णमासी च प्रतिष्ठायां सुशोभना ।
गुरुः सोमो बुधः शुक्रः प्रतिष्ठायां शुभावहाः ॥
मेषो वृषोऽथ मिथुनं कर्कटो वृश्चिकस्तथा ।
सिंहः कन्या च सततं विज्ञेयाः शान्तिकारकाः ॥
उत्तरासु तथा मूले रौद्रे पुष्ये च शस्यते ।
वैष्णवे चानुराधे च रेवत्यां रोहिणीषु च ॥
अश्विन्यामथ चित्रायां भरण्याञ्च पुनर्वसौ ।
प्रतिष्ठां कारयेद्विद्वान् नक्षत्रे मृगशीर्षके ॥
अयने विषुवे चैव षड़शीतिमुखे तथा ।
मित्रं परममित्रञ्च सम्पत् क्षेमञ्च साधकम् ॥
तारापञ्चकमेतच्च प्रतिष्ठायां प्रशस्यते ।
गरं विष्टिं हरिकिन्तुघ्नं शकुनं सचतुष्पदम् ॥
वर्ज्जयेत् सर्वयत्नेन प्रतिष्ठायां सुरेश्वर ।
विष्कुम्भमतिगण्डञ्च शूलं परिघमेव च ॥

गण्डं व्याघातकञ्चैव वैधृतिं वज्रमेव च।
व्यतीपातं हर्षणञ्च योगानेतान् विवर्ज्जयेत्॥
लग्ने च सुस्थिरे कार्य्यं स्थिरांशे सुरसत्तम।

तथा,—

कूपवापीतड़ागानां पश्चिमे यागमण्डपम्।
कुर्य्यात् यथाक्रमेणैव कन्यसं मध्यमुत्तमम्॥

यथाक्रमेण कूपादिक्रमेण। कन्यसं कनीयांसं कनिष्ठमित्यर्थः।

कन्यसं दशहस्तन्तु कूपे शस्तं तथानघ।
द्विषट्कं कारयेद्वाप्यां पुष्करिण्यां चतुर्द्दश॥
द्विरष्टहस्तं कुर्व्वीत तड़ागे मण्डपं शुभम्।
मण्डपस्यार्द्धभागेन चतुरस्रा तु वेदिका॥
तदष्टांशोच्छ्रिता सम्यक् वेदिका सुमनोहरा।
पूर्व्ववत् कारयेत् कुण्डान् तोरणानि तथैव च॥
वारुण्यां वा[1] न्यसेत् कुण्डं यथावत् कलसान्वितम्।

पूर्व्ववत् प्रासादप्रतिष्ठाप्रकरणे उक्तान् चतुरः कुण्डान्।

यथा,—

चतुष्कोणं भवेत्कुण्डं पूर्व्वस्यां दिशि सर्व्वदा।
अर्द्धचन्द्रं भवेद्याम्ये वारुण्यां वर्त्तुलं भवेत्।
पद्माभमुत्तरे भागे कुण्डं स्याद्विजसत्तम॥

अथवा वारुण्यां दिशि वा एककुण्डं ब्रह्मकलसान्वितं गुरुः कुर्य्यादित्यर्थः।

---

१ ख पुस्तके, विन्यसेत्।

तथा,— अग्न्याधानं वारुणे तु कुण्डे कुर्य्याच्च देशिकः।
अरण्यान्तु समुत्पाद्य मथितं वाऽऽहृताग्निनम्॥

पश्चिमकुण्डे अग्न्याधानं गुरुः कुर्य्यात्। कुण्डचतुष्टयपक्षे तमग्निमन्येषु कुण्डेषु त्रिषु निनयेत्।

तथा तत्रैव,—

अश्वत्थोडुम्बरौ चैव न्यग्रोधः प्लक्ष एव च।
तोरणार्थेषु कथिताः पूर्व्वादिषु यथाक्रमम्॥
सुशोभनं भवेत्पूर्व्वे सुभद्रं दक्षिणे भवेत्।
सुकर्म्मा पश्चिमे भागे सुहोत्रन्तु तथोत्तरे॥
एकहस्तं खनेद्भूमौ चतुर्हस्तं समुच्छ्रयेत्।
द्विहस्तान्तरमन्योन्यं तोरणानां प्रकल्पयेत्॥
तिर्य्यक्फलकमानं स्यात् स्तम्भानामर्द्धमानतः।
स्योना पृथिवीति मन्त्रेण स्थाप्याः पूर्व्वाद्य तोरणाः॥
तोरणस्तम्भमूले तु कलसान् मङ्गलाङ्कुरान्।

तत्रैव,—

मण्डलञ्चालिखेत् वेद्यामर्द्धचन्द्रं सुशोभनम्॥
लिखित्वा भद्रकं पूर्व्वं चतुरस्रं सुसूचितम्।
आग्नेयेशानकोणाभ्यां लाञ्छयेद्दक्षिणोत्तरे॥
उत्तरादौ दक्षिणान्तं तत्सूत्रं भ्रामयेद्बुधः।
अर्द्धचन्द्रवदेवं स्यात् मण्डलं भद्रगर्भितम्॥
अथवा पद्मगर्भन्तु भद्रञ्चैव सुरोत्तम।
अर्द्धचन्द्रोपमं कुर्य्यादेवं स्यादर्द्धचन्द्रवत्॥

भद्रकं सर्वतोभद्रमण्डलं पूर्वस्यां मण्डलमध्ये तत्परिमितं सूत्रं विन्यस्य भ्रामयेत्।

तथा,—

स्थापयेत् कलसं तत्र द्वारे द्वारे यथाविधि।

तथा,—

अष्टाविंशाधिकशतपलपूरांश्च सुन्मयान्॥
आहृत्य कलसान् वस्त्रपूततोयेन पूरयेत्।
सहिरण्यान् वस्त्रयुग्मबद्धकण्ठान्निवेशयेत्॥
तोरणाच्च बहिः स्थाप्याः प्रागादिषु यथाक्रमम्।
पूजयेद्गन्धपुष्पाद्यै मन्त्रैरावाह्य दिक्पतीन्॥

## तथायं क्रमः।

चतुर्द्वारोपेतं मध्ये वेदीसमन्वितं चतुर्दिक्षु चतुःकुण्डयुक्तमशक्तौ पश्चिमे एककुण्डयुक्तं मण्डपं विधाय प्रतिष्ठापूर्व्वसप्तमदिने यथाविधि अङ्कुरारोपणं[1] कुर्य्यात्। ततो मण्डपचतुर्दिक्षु यथासंख्यं चतुरस्रमर्द्धचन्द्रं वर्त्तुलं पद्मसदृशं कुण्डमशक्तौ पश्चिमस्यामेकं कुण्डं वा कुर्य्यात्। मध्ये वेदिकायां सर्व्वतोभद्रमण्डलगर्भितमर्द्धचन्द्रमण्डलं निर्म्माय दक्षिणे तु चतुष्कोणं सपद्मं स्वस्तिकमण्डलं लिखेत्।

## अथाधिवासः।

देशिको विधिवत् स्नात्वा कृत्वा पूर्व्वाह्णिकीः क्रियाः।
यायादलङ्कृतो मौनी यागार्थं यागमण्डपम्॥

१ ख पुस्तके, अङ्कुरार्पणम्।

मण्डपद्वारे आगत्य हस्तपादान् प्रक्षाल्याचम्य सामान्यार्घ्यं विधाय पूजयेत्।

अस्त्रेण पात्रं प्रक्षाल्य हृन्मन्त्रेण प्रपूरयेत्।
निक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन तु।
दर्शयेद्धेनुमुद्राञ्च सामान्यार्घ्यमिदं स्मृतम्॥

ततो द्वारं अस्त्राय फड़िति संप्रोक्ष्य द्वारस्योर्द्धे विघ्नं महालक्ष्मीं सरस्वतीञ्च पूजयेत्।

दक्षिणपार्श्वे—विघ्नं गङ्गां। वामपार्श्वे—क्षेत्रपालं यमुनाञ्च पूजयेत्। देहल्यामस्त्रं पूजयेत्।

दिव्यदृष्ट्या दिव्यान्, अस्त्राय फड़ित्यम्बुभिश्चान्तरीक्षगान्, पार्ष्णिघातैस्त्रिभिर्भौमान् विघ्नानुत्सारयेत्। ततः किञ्चिद्वामशाखां स्पृशन् यजमानसहितो गुरुर्देहलीं संलङ्घ्य दक्षिणपादपुरःसरमन्तः प्रविश्य,—

पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद्यागमण्डपम्।

मूलमन्त्रेण वीक्षणं, अस्त्राय फड़िति प्रोक्षणं, अस्त्राय फड़िति दर्भैस्ताड़नं हूमित्यभ्युक्षणम्।

चन्दनागुरुकर्पूरैर्मण्डपं धूपयेत्ततः।
लाजचन्दनसिद्धार्थभस्मदूर्व्वाकुशाक्षताः।
विकिरा इति सन्दिष्टाः सर्व्वविघ्नौघनाशनाः॥

एतान् मूलमन्त्रेणाभ्यर्च्च्य क्ष्रौमिति नरसिंहमन्त्रेण सप्तवारमभिमन्त्र्य नरसिंहं ध्यायन्—

ॐ वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः।

अपसर्पन्तु ते सर्व्वे नृसिंहास्त्रेण ताड़िताः ॥

क्षौमिति नरसिंहमन्त्रेण निक्षिपेत्।

क्षौमिति मूलमन्त्रो ह्यक्षरो हयशीर्षे उक्तो यथा,—

अष्टाविंशान्तबीजेन चतुर्द्दशयुतेन तु।

अर्द्धेन्दुबिन्दुयुक्तेन प्रणवोद्दीपितेन च ॥

ततोऽस्त्राय फड़िति जपितदर्भमुष्टिना तान् विकिरान् मार्ज्जयित्वा ईशानदिशि वर्द्धन्या आसनाय स्थापयेत्।

अत्र केचित्,—

श्वो यियक्षुणाऽधिवासदिनेऽङ्गाधिकाराय तद्बीजभूतकाम्यप्रधानाधिकारसम्पादकः कुशतिलजलत्यागसहितः काम्याभिलापः कार्य्यः। न त्वधिवासस्य पृथक्[1] संकल्प इति वदन्ति।

वाक्यमपि वर्णयन्ति—अमुककामः श्वो वरुणयागेनाहं यक्ष्ये इति।

तदयुक्तम्।

अद्य सोमार्कग्रहणसंक्रान्त्यादौ सुतीर्थके।

इत्यादिपूर्व्वलिखिताग्निपुराणादिवचनानुरोधेन अद्यपदप्रयोगस्यावश्यकत्वात्।

मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्व्वशः।

इति तिथ्याद्युल्लेखनियमाच्च अद्यामुकतिथौ श्वो यक्ष्ये इति वाक्यानन्वयात्।

किञ्च—अङ्गं हि द्विविधं भवति उपरञ्जकमुपनायकञ्च परस्परोपकारकमुपरञ्जकमाहत्योपकारकमुपनायकम्। तत्र देवता-

---

१ ख पुस्तके, पूर्व्वम्।

वाहनरूपस्य पूर्व्वदिनविहिताधिवासस्योपरञ्जकाङ्गस्याङ्गान्तरोपकरण-मात्रत्वेन वाच्यत्वात् कर्म्माङ्गाचमनादिवदङ्गत्वेऽपि प्रधानाभिलापे तदनुष्ठाने विरोधाभावात्। न चाऽभिलापोऽधिकारसम्पादकः, नित्यकर्म्मणि तदभावेऽप्यधिकारात्।

किन्तु मनसा संकल्पयति वाचाऽभिलपति कर्म्मणा प्रतिपादयतीति हारीतवचनम्।

मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते।
क्रियते कर्म्मणा पश्चात्प्रमाणं मे मनस्ततः॥

इति वनपर्व्ववचनञ्च निमित्तनिश्चयाधिकरणकेन अमुककामनया मयेदं कर्त्तव्यमिति निश्चयरूपेण..मनःसंकल्पेनैव सम्पादितस्याधिकारित्वस्यानन्तरं काम्यप्रधानाभिलापस्याङ्गविशेषरूपतया कर्त्तव्यत्वनियमं बोधयति।

अतएव स्पृष्टास्पृष्टभङ्गयागे निमित्तनिश्चयाभावेनैव संकल्पानिश्चयादधिकारविरहात् पूर्व्वदिनेऽधिवासबाधः।

एवञ्च अङ्गानां बाधकं विना प्रधानदेशकालान्वयानियमात् वाचाऽभिलपति कर्म्मणा प्रतिपादयतीति वचनेन प्रधानाभिलापानन्तरमेवाहत्योपकारकस्य प्रधानाङ्गस्यैवानुष्ठाननियमविधानात्।

अन्यथा कर्म्माङ्गाचमनाभ्युदयिकश्राद्धादेरपरञ्जकाङ्गस्यापि तत्परतः प्रसङ्गात्। प्रधानानुष्ठानदिन एव प्रधानाभिलापः। तच्च हारीतवचनस्वरसात्।

अयोगे क्लेशहरणमसंकल्पे व्रतक्रिया।
अब्रह्मचर्य्ये चर्य्या च चयं स्यात् कुम्भसंज्ञितम्॥

इति हरिवंशवचनाच्च प्रधानाभिलापवदुपरञ्जकाङ्गानामपि पृथगभिलापस्य कर्त्तव्यत्वमायातम्।

यथा श्राद्धपूर्व्वदिनेऽकृतेऽपि प्रधानाभिलापे ब्राह्मणानुमतिरूपस्य उपरञ्जकस्य निमन्त्रणस्यानुष्ठानम्।

यथा चाभ्युदयिकश्राद्धमातृपूजादीनामुपरञ्जकाङ्गानां प्रधानाभिलापात् पूर्व्वं पृथगेवाभिलापः।

यथा च शारदीयदुर्गापूजायां प्रधानाभिलापस्य पूर्व्वं बोधनपत्रीस्थापनादीनामुपरञ्जकाङ्गानां पृथगेवाभिलापस्तथाऽधिवासस्यापीति। अन्यथा एष्वपि स्थानेषु निमन्त्रणाद्युपरञ्जकाङ्गानां पूर्व्वं प्रधानाभिलापप्रसङ्गः स्यात्।

.एवञ्च,—

नानिष्ट्वा तु पितॄन् श्राद्धैः कर्म्म वैदिकमारभेत्।

इति शातातपवचने क्त्वाबोधितानन्तर्य्यवशाद्यस्मिन् दिने प्रधानकर्म्मारम्भस्तस्मिन् दिने मातृपूजाभ्युदयिकश्राद्धादिकं कर्त्तव्यं विशेषविधानं विना अङ्गानां प्रधानदेशकालकर्त्तव्यत्वनियमाच्च। अतो वृषोत्सर्गादौ पूर्व्वदिनकर्त्तव्याधिवासस्य पृथगभिलापानुष्ठानरूपप्राचीनशिष्टाचारोल्लङ्घनी दुर्य्युक्तिप्रत्याशा हातव्येत्यलं बहुना। तत्रेदृशोऽभिलापः—

ॐ अद्येत्यादि सर्व्वकामसुसंपूर्ण-वैदूर्य्यमणिभूषित-सौवर्णकामगदिव्यस्त्रीशतसङ्कुल-शक्रलोकावस्थितविमानप्राप्ति-नष्टकिल्बिषत्वभूतनिषेवितवैवस्वतपुरानभियान-मन्वन्तरावच्छिन्नशक्रलोकवास-तदुत्तरसर्व्वलक्षणसम्पूर्णसर्व्वैश्वर्य्यसमन्वितपृथिवीपालद्विजोत्तमान्य-

तरलकामनया हयग्रीवपञ्चरात्रोक्तविधिना म्वः कर्त्तव्ये वाप्यादि-जलाशयप्रतिष्ठाकर्म्मण्यधिवासकर्म्माऽहं करिष्ये ।

ततो गुरुर्यज्जायत इति पठेत् । ततो गुरुं वृणुयात् ततः सित-पुष्पैर्वस्त्रयुग्मैरङ्गुलीयैश्च चीन् मूर्त्तिपान् ब्राह्मणांश्च वृणुयात् ।

ततो गुरुः शुक्लाम्बरधरः सोष्णीषः साङ्गुलीयहस्तः शुचि-रलङ्कृतो वरुणरूपमात्मानं ध्यात्वा पञ्चगव्यार्घ्यतोयाभ्यां—

ॐ वेद्या वेदिरिति मण्डपं वेदीश्च चिः प्रोक्ष्य पूर्व्वदक्षिणोत्तर-कुण्डेषु स्थापयेत् पश्चिमकुण्डे तु स्वयमेव ।

ततः पूर्व्वद्वारे द्विहस्तान्तरमुभयपार्श्वे हस्तैकनिम्नगर्त्ते वारि-यवतण्डुलयुते अश्वत्थतोरणद्वयं चतुर्हस्तोच्छ्रायं स्योना पृथिवीति मन्त्रेण संस्थाप्य स्थिरो भवेति स्थिरीकृत्य तदुपरि फलकं दत्वा स्योना पृथिवीति मन्त्रेण सम्पूज्य सुशोभनतोरण इहागच्छेत्यावाह्य पाद्यादिभिः पूजयेत् ।

दक्षिणद्वारे उडुम्बरतोरणद्वयं स्योना पृथिवीति मन्त्रेण संस्थाप्य स्थिरीभवेति स्थिरीकृत्य तदुपरि फलकं दत्वा स्योना-पृथिवीति मन्त्रेण सम्पूज्य सुभद्रतोरण इहागच्छेत्यावाह्य पूजयेत् । एवं पश्चिमद्वारे पूर्व्ववद्वटतोरणद्वयं संस्थाप्य सुकर्म्माणं तोरणं पूजयेत् । तथैवोत्तरद्वारे पर्कटीतोरणद्वयं संस्थाप्य सुहोत्रं तोरणं पूजयेत् ।

बाह्यतोरणस्तम्भमूले कलशान् मङ्गलाङ्कुरांश्च पञ्चघोषपुरःसरं संस्थाप्य मण्डपबाह्ये तोरणाभ्यन्तरे पूर्व्वादिकलशेषु दिक्पालाना-वाह्य गन्धादिभिः पूजयेत् ।

यथा हयशीर्षे,—

पूर्व्वादिषु घटमारोप्य ॐ आयाहीन्द्र महाराजाधिराज वज्रहस्त स्वबलवाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ पूर्व्वद्वारमभिरक्ष रक्षेत्यावाह्य ॐ त्रातारमिन्द्रमित्यनेनार्घ्यं दत्वा गन्धाद्यैरर्च्चयेत्।

आग्नेये,—

ॐ आयाहि चित्रभानो महाराजाधिराज शक्तिहस्त स्वबल-वाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ आग्नेयीं दिशमभिरक्ष रक्षेत्यावाह्य ॐ अग्निर्मूर्द्धेत्यनेनार्घ्यं दत्वा गन्धादिभिरर्च्चयेत्।

दक्षिणे,—

ॐ आयाहि यम महाराजाधिराज दण्डहस्त स्वबलवाहनावृत रक्ताक्षायतलोचन इहागच्छ इहागच्छ तिष्ठ तिष्ठ दक्षिणां दिशमभिरक्ष रक्षेत्यावाह्य ॐ असि यम इत्यर्घ्यं दत्वा गन्धादिभि रर्च्चयेत्।

नैर्ऋत्याम्,—

ॐ आयाहि नैर्ऋत महाराजाधिराज खड्गहस्त स्वबलवाहना-वृत महाबल इहागच्छ इहागच्छ तिष्ठ तिष्ठ नैर्ऋतीं दिशमभिरक्ष रक्षेत्यावाह्य ॐ एष ते निर्ऋते भाग इत्यनेनार्घ्यं दत्वा गन्धा-दिभिरर्च्चयेत्।

पश्चिमे,

ॐ आयाहि वरुण महाराजाधिराज पाशहस्त स्वबलवाहना-वृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ पश्चिमद्वारमभिरक्ष रक्षेत्यावाह्य ॐ उरुं हि राजा वरुण इत्यनेनार्घ्यं दत्वा गन्धादिभिरर्च्चयेत्।

वायव्यां,

ॐ आयाहि पवन महाराजाधिराज ध्वजहस्त[1] स्ववलवाहना-वृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ वायवीं दिशमभिरक्ष रक्षे-त्यावाह्य ॐ [2]वात आवातु भेषजं इत्यनेनार्घ्यं दत्वा गन्धादिभि-रर्च्चयेत् ।

उदीच्यां,

ॐ आयाहि सोम महाराजाधिराज शङ्खहस्त स्ववलवाहनावृत इहागच्छ इहागच्छ तिष्ठ उत्तरद्वारमभिरक्ष रक्षेत्यावाह्य ॐ सोमं राजानमित्यनेनार्घ्यं दत्वा गन्धादिभिरर्च्चयेत् ।

ऐशान्यां—ॐ आयाहीश महाराजाधिराज शूलहस्त स्ववल-वाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ ऐशानीं दिशमभिरक्ष रक्षेत्यावाह्य ॐ ईशानमस्येति[3] मन्त्रेणार्घ्यं दत्वा गन्धादिभिरर्च्चयेत् ।

इन्द्रेशानयोर्मध्ये,—

ॐ आयाहि चतुर्मुख महाराजाधिराज सर्व्वलोकाधिपते अक्षस्रुवहस्त स्ववलवाहनावृत इहागच्छ इहागच्छ तिष्ठ तिष्ठ ऊर्द्ध्वां दिशमभिरक्ष रक्षेत्यावाह्य ॐ हिरण्यगर्भ इत्यनेनार्घ्यं दत्वा गन्धा-दिभिरर्च्चयेत् ।

---

१ ख पुस्तके, पाशहस्त ।

२ ख पुस्तके, वात आवातु भेषजं शम्भूर्मयोभु
नो हृदे प्राण आयूंषि तारिषत । इति पूर्णमन्त्रमुद्धृतम् ।

३ ख पुस्तके, ॐ ईशावास्येति ।

नैर्ऋतवरुणयोर्मध्ये,—

ॐ आयाह्यनन्त महाराजाधिराज स्ववलवाहनावृत नागकुलहस्त इहागच्छ इहागच्छ तिष्ठ तिष्ठ अधोदिग्गमभिरक्ष इत्यावाह्य ॐ नमोऽस्तु सर्पेभ्य इत्यनेनार्घ्यं दत्त्वा गन्धादिभिरर्च्चयेत्। ततो ध्वजान् पताकाश्च पूजयेत्।

ततो मण्डपं प्रविश्य पश्चिमकुण्डोत्तरभागे ताम्रमयं मृन्मयं वा कुम्भं संस्थाप्य वरुणं तत्र गन्धादिभिरर्च्चयेत्। तत ऐशान्यां पूर्व्वस्थापितविकिरोपरि घृतधारां स्थापयित्वा अस्त्राय फडिति मन्त्रेणास्त्रदेवतां सिंहस्थां खड्गखेटकधारिणीं घोररूपां पश्चिमस्यां सम्पूज्य चल चलेत्युच्चार्य्य तां गृहीत्वा तदच्छिन्नधारया तत्पश्चात् वरुणकुम्भं गृहीत्वा प्रदक्षिणमीशानादितो, भो भोः शक्रादिलोकपालाः श्रीवरुणस्याज्ञया यागं रक्षत रक्षत इति मण्डपं सिञ्चेत्।

घृतधारां कुम्भञ्च स्वस्वस्थाने निवेश्य कुम्भे पुनर्वरुणं घृतधारायाञ्च पुनरस्त्रदेवताञ्च सम्पूज्य वस्त्रयुग्मेन कलसं वस्त्रेण घृतधाराञ्च वेष्टयेत्।

ततः पञ्चगव्यं शोधयित्वा गायत्र्या यागभूमिं सम्प्रोक्ष्य घटैकं स्थापयित्वा तत्र गणेशं ग्रहांश्च स्वैः स्वैर्मन्त्रैः पूजयेत्।

ततो दक्षिणे पूर्व्वलिखितमण्डले ॐ योगे योग इति कुशानास्तीर्य्य गन्धतोयेन सम्प्रोक्ष्य तत्र शय्यामास्तीर्य्य शोभनमुपधानद्वयं दत्त्वा ॐ ऊर्द्धं वपुष इति वितानं बद्ध्वा पुष्पाणि विकिरेत्। ऐशान्यां स्नानमण्डपे भद्रपीठमारोप्य सर्व्वद्रव्याण्यानीय यथास्थानेषु यथाद्रव्ययुतान् कलसान् स्थापयेत्।

हयग्रीवे,—

सामुद्रं पूर्व्वकुम्भे तु आग्नेये जाह्नवीजलम् ।
दक्षिणे वर्षतोयन्तु नैर्ऋते निर्झरोदकम् ॥
नदीतोयं पश्चिमे तु वायव्ये तु नदोदकम् ।
औद्भिदं चोत्तरे स्थाप्यं ऐशान्यां तीर्थसम्भवम् ॥

औद्भिदं नारिकेलाद्युदकमित्यर्थः ।

तथा,—

अलाभे तोयजातीनां नादेयैः पूर्य्य कल्पयेत् ।
रत्नानि तेषु निक्षिप्य पल्लवं नीलमेव च ॥
एकाशीति घटांस्तान्यान् सर्व्वौषधियुतानपि ।
यासां राजेति मन्त्रेण अभिमन्त्र्य सकृत् सकृत् ॥

तथा,—

तत आनीय वरुणं स्नानपीठे निवेशयेत् ।
ये ते शतेति मन्त्रेण देवं दर्भैश्च मार्ज्जयेत् ।
घृतेनाभ्यञ्जयेत् पश्चान्मूलमन्त्रेण देशिकः ॥
शन्नो देवीति मन्त्रेण क्षालयेदुष्णवारिणा ।
शुद्धोदकेन वरुणं शुद्धवत्याऽभिषेचयेत् ॥

तथा,—

भद्रदेवां महाभद्रां कुशायाम् रजनीं तथा ।
निर्मञ्छनाय देवस्य शिरीषं सूर्य्यवर्च्चिनम्[१] ॥

---

१ ख पुस्तके, सूर्य्यवर्च्चिनीम् ।

देवं नीराज्य निर्मञ्छ्य दुर्मित्रेति विचक्षणः।
चित्रं देवेति मन्त्रेण नेत्रे चोन्मीलयेद्बुधः॥
तच्चक्षुरिति मन्त्रेण दृष्टिं कृत्वा तु पूरयेत्।
मधुरक्षितयेनैव सौवर्णकशलाकया॥
हेमशृङ्गीं गुरोर्दत्वा कलसैरभिषेचयेत्।
समुद्रज्येष्ठामन्त्रेण[1] सामुद्रेणाभिषेचयेत्॥
समुद्रं गच्छमन्त्रेण जाह्नव्येनाभिषेचयेत्।
वर्षतोयेन वरुणं सोमो धेन्विति सेचयेत्॥
[2]पञ्चगव्येन पश्चाच्च आपोहिष्ठेति सेचयेत्।
पञ्चनद्येति नादेयैर्नदतोयैस्तथैव च॥
तदादित्येति मन्त्रेण औद्भिदेनाभिषेचयेत्।
तीर्थतोयेन वरुणं पावमान्याभिषेचयेत्॥
पञ्चगव्येन पश्चाच्च आपोहिष्ठेति सेचयेत्।
हिरण्यवर्णा मन्त्रेण स्वर्णतोयेन सेचयेत्॥
वापीतोयेन देवेश आपो अस्मेति सेचयेत्।
कौपेन स्नापयेद्देवं व्याहृत्या देशिकोत्तमः॥
तड़ागस्य तु तोयेन वरुणस्येति वै ऋचा।
पल्वलोदककुम्भेन शवसाम्नाऽभिषेचयेत्॥
गिरिनिर्झरतोयेन आपोदेवीति सेचयेत्।

---

१ क पुस्तके, समुद्रज्येष्ठ।

२ ख पुस्तके, पञ्चगव्येनेत्यादिस्थाने—
निर्झरोदककुम्भेन देवीरापेति सेचयेत्।

वरुणस्येति मन्त्रेण एकाशीतिघटैस्तथा ॥

ततः शुक्लवाससा जलमपनयेत्।

तथा,— त्वन्नो अग्ने वरुणेति अर्घ्यं पाद्यं प्रदापयेत्।

व्याहृत्या मधुपर्कञ्च मूलेनाचामयेत्ततः ॥

बृहस्पतेति वस्त्रन्तु वरुणेति पवित्रकम्।

प्रणवेनोत्तरीयञ्च गन्धं गन्धवतीति च ॥

पुष्पं दीपं तथा धूपं नैवेद्याभरणादिकम्।

चामरं व्यजनं छत्रं दर्पणं वैजयन्तिकाम् ॥

रोचनामञ्जनं माल्यं दद्यात्कुशासमन्वितः।

त्वन्नो अग्ने वरुणेति मूलमन्त्रेण वा बुधः ॥

उत्तिष्ठेति समुत्थाप्य शय्यायां विनिवेशयेत्।

मूलमन्त्रेण कुर्वीत सजीवकरणं गुरुः।

मूलमन्त्रेण देवेशं गन्धपुष्पादिनाऽर्चयेत् ॥

तद्यथा,—

समस्तयादोगणसहितं शय्यायामारोप्य वँ वरुणाय नम इति पुष्पाञ्जलिं दत्वा कुशयुक्तासने प्राङ्मुख उपविश्य तालत्रयं दिग्बन्धनं कृत्वा भूतशुद्धिं विधाय मातृकान्यासं कृत्वा वाँ वीँ वूँ वैँ वौँ वः इति करन्यासं षडङ्गन्यासञ्च विधाय वँ इति मूलमन्त्रेण प्राणायाम-त्रयं कृत्वा आधारशक्त्यादि-चन्द्रमण्डलान्तं पीठन्यासं कुर्यात्।

हयशीर्षे,—

ततो विचिन्तयेद्देवं परमात्मानमीश्वरम्।

प्रशान्तवदनं सौम्यं हिमकुन्देन्दुसन्निभम् ॥

सर्व्वाभरणसंयुक्तं सर्व्वलक्षणलक्षितम्।
किरणैः शीतलैः सौम्यैः प्रीणयन्तमिव स्थितम्॥
लावण्यामृतधाराभिस्तर्पयन्तमिव प्रजाः।
राजहंससमारूढ़ं पाशव्यग्रकरं शुभम्॥
पुष्कराद्यैः सुतैः सर्व्वैः समन्तात् परिवारितम्।
गौर्य्या काम्या चानुगतं नदीभिः परिवारितम्॥
नागैर्यादोगणैर्युक्तं ब्रह्माणमिव चापरम्।
सृष्टिसंहारकर्त्तारं नारायणमिवापरम्॥

इति ध्यात्वा मनसा पाद्यादिभिः सम्पूज्य अर्घ्यस्थापनं कृत्वा तदुत्तरे पाद्यपात्रमाचमनीयपात्रं अर्घ्य दक्षिणे प्रोक्षणीपात्रं तोयेनापूर्य्य गन्धपुष्पे दत्वा अस्त्राय फड़िति संरक्ष्य अर्घ्योदकं किञ्चिन्निक्षिप्य तेनोदकेनात्मानं पूजोपकरणञ्चाभ्युक्षेत्।

ततः प्रतिमायां पूजयेत्,—

आधारशक्तये नमः प्रकृत्यै कूर्म्माय अनन्ताय पृथिव्यै क्षीरसिन्धवे श्वेतद्वीपाय रत्नमण्डपाय कल्पवृक्षाय रत्नसिंहासनाय नमः।

सिंहासनस्याग्नेयादिकोणेषु,—

धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय।

पूर्व्वादिचतुर्द्दिक्षु,—

अधर्म्माय अज्ञानाय अवैराग्याय अनैश्वर्य्याय।

मध्ये,—

शेषाय पद्माय अं सूर्य्यमण्डलाय उं सोममण्डलाय मं वह्निमण्डलाय।

पुनर्वरुणं ध्यात्वा मनसा पाद्यादिभिः पूजयित्वा प्रवहन्नासापुटेन पुष्पाञ्जलौ निःसार्य्य प्रतिमायां स्थापयित्वा मूलमन्त्रेण सावयवीकृत्य ॐ वरुणस्येति प्रतिमायां सान्निध्यं कल्पयित्वा प्राणप्रतिष्ठां कुर्य्यात्।

तद्यथा,—

मातृकान्यासं षड़ङ्गन्यासञ्च विधाय हृदये हस्तं दत्वा ॐ वौमिति मूलमन्त्रमष्टधा जपित्वा—ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः श्रीवरुणस्य प्राणा इह प्राणाः। आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः श्रीवरुणस्य सर्व्वेन्द्रियाणि। आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः श्रीवरुणस्य वाङ्मनश्चक्षुःश्रोत्र-घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति पठित्वा भगवन् श्रीवरुण इहागच्छ इहागच्छ तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भव इत्यावाहन्यादिमुद्राः प्रदर्श्य पुनरपि देवताङ्गे षड़ङ्गन्यासं कुर्य्यात्,—

वाँ हृदयाय नमः वीँ शिरसे स्वाहा वूँ शिखायै वषट् वैँ कवचाय हुँ वौँ नेत्राभ्यां वौषट् वः अस्त्राय फट्। ॐ वौँ वरुणाय नम इति पुष्पाञ्जलिं दत्वा भगवन् श्रीवरुण स्वागतं ते इति स्वागतं पृच्छेत्।

मूलमन्त्रेण चासनं पद्मश्यामालतादूर्व्वापराजिताकुशाग्र-सहितं पाद्यं यवसिद्धार्थगन्धाक्षतपुष्पतिलदूर्व्वाकुशाग्रसहितमष्टाङ्गार्घ्यं जातीफललवङ्गकक्कोलमिश्रमाचमनीयं मधुपर्कं पुनरपि तथैवाच-मनीयं वस्त्रमाभरणं यज्ञोपवीतं चन्दनकर्पूरागुरुभिर्गन्धं पुष्पमाल्य-धूपदीपनैवेद्यानि पुनराचमनीयं चन्दनञ्च दद्यात्।

तत्र तत्र जलं दद्यादुपचारान्तरान्तरे।

ऊर्द्ध्वं ऊषुन इति मन्त्रातपं दद्यात्।

गौर्य्यै नम इति कान्त्यै नम इति पत्नीद्वयं पूजयित्वा—

ॐ अनन्ताय नम ॐ वासुकये ॐ पद्माय ॐ महापद्माय ॐ तक्षकाय ॐ कुलिकाय ॐ कर्कटाय ॐ शङ्खाय नम इति। नदीभ्यः कूर्म्माय मकराय मत्स्याय डुण्डुभाय कुलीराय मण्डूकाय शिशुमाराय समुद्रेभ्यो नम इति पूजयेत्।

हयशीर्षे,—

मण्डले मूलमन्त्रेण पूर्व्वोक्तविधिनाऽर्च्चयेत्।

पूर्व्वलिखितसर्व्वतोभद्रगर्भार्द्धचन्द्रमण्डले पीठपूजां विधाय तत्र श्रीवरुणमावाह्य मूलमन्त्रेण पाद्यार्घ्याचमनीयगन्ध-पुष्प धूप-दीप-वस्त्र-यज्ञोपवीताभरण—नैवेद्य पुनराचमनीय-ताम्बूल-चन्दन—पुष्पाञ्जलिभिः पूजयित्वा।

अग्न्यादिकोणकेशरेषु,—

वां हृदयाय नमः वीं शिरसे स्वाहा वूं शिखायै वषट् वैं कवचाय हुं वौं नेत्राभ्यां वौषट्।

दिक्केशरेषु—वः अस्त्राय फट्।

पूर्व्वादिदिक्षु,—

इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय अनन्ताय ब्रह्मणे नमः।

---

१ ख पुस्तके, ०गर्भित०।

तेषां बहिः,—

वज्राय शक्तये दण्डाय खड्गाय पाशाय अङ्कुशाय गदायै शूलाय चक्राय पद्माय नमः।

समस्तयादोगणपरिवारसहिताय श्रीवरुणाय नम इति पुष्पाञ्जलिं दत्त्वा नागयष्टावपि वरुणमावाह्य पाद्यादिभिः पूजयेत्। हयशीर्षे,—

अग्न्याधानं वारुणे तु कुण्डे कुर्य्यात्तु देशिकः।

अरण्यान्तु समुत्पाद्य मणिजं वा हुताशनम्॥

पश्चिमकुण्डे गुरुरग्न्याधानं कृत्वा अन्येषु त्रिषु कुण्डेषु तमग्निं नयेत्।

वारुण्यां वा न्यसेत् कुण्डं यथावत् कलसान्वितम्।

इति पूर्व्वलिखितवचनादग्नौ पश्चिमकुण्ड एव गुरुर्जुहुयात्।

तत्रादौ कुण्डसंस्कारं कुर्य्यात् तन्मध्ये यवचरुं श्रपयेत्। यवतण्डुलानां,—

ॐ भूस्त्वा जुष्टं गृह्णामि ॐ भूस्त्वा जुष्टं निर्वपामि ॐ भूस्त्वा जुष्टं प्रोक्षामीति ग्रहणनिर्वपणप्रोक्षणानि कृत्वा उदूखलमध्ये स्थापयेत्।

एवं ॐ भुवस्त्वा ॐ स्वस्त्वा ॐ सवित्रे त्वा ॐ वरुणाय त्वा ॐ अग्नये त्वा ॐ सूर्य्याय त्वा ॐ प्रजापतये त्वा ॐ द्यौस्त्वा ॐ अन्तरीक्षाय त्वा ॐ पृथिव्यै त्वा ॐ इह रत्यै त्वा ॐ उग्राय त्वा ॐ भीमाय त्वा ॐ महारौद्राय त्वा ॐ विष्णवे त्वा ॐ वरुणोमातरन्वयम् रायस्पोषाय त्वा ॐ इन्द्रायत्वा ॐ अग्नयेत्वा ॐ यमायत्वा ॐ नैर्ऋ-तायत्वा ॐ वरुणायत्वा ॐ वायवेत्वा ॐ कुबेरायत्वा ॐ ईशाना-

यत्वा ॐ अनन्तायत्वा ॐ ब्रह्मणेत्वा ॐ महाराजायत्वा, ॐ विष्णवेत्वा इति वारत्रयं[1] ॐ सोमायत्वा इति वारषट्कं ॐ वरुणायत्वा ॐ ब्रह्मस्त्वा ॐ रुद्रायत्वा निर्वपामीति निर्वापादिकं कृत्वा तूष्णीं वारद्वयं निर्वपेत् ।

ततो मुसलेनावहत्य सूर्पेण प्रस्फोट्य प्रक्षाल्य पेषयित्वा चरुस्थाल्यां निक्षिप्य पूर्व्वादिचतुर्दिक्षु गङ्गादिसंज्ञिकाश्चतस्रो धेनूः संस्थाप्य गायत्र्या दोहनं कृत्वा तेन दुग्धेन सपवित्रं चरुं स्रपयित्वा ॐ त्वन्नो अग्ने वरुणेत्यभिघार्य्यावतारयेत् ।

ततश्च कुशण्डिकां समाप्याघाराज्यभागौ च कृत्वा व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा पूर्व्वस्थापितवरुणकुम्भे वरुणं सम्पूज्य स्ववेदादिमन्त्रेणाष्टोत्तरशतं पलाशसमिधो हुत्वा महाव्याहृतिभिश्च तिलानष्टोत्तरशतं हुत्वा वरुणघटे सम्पात[2]विधिना ॐ वौं स्वाहेति मूलमन्त्रेणाष्टोत्तरशतं घृतेन हुत्वा चरुहोमं कुर्य्यात् ।

तत्रायं क्रमः,—

चरौ घृतस्रुवं दत्वा जुहूाञ्च स्रुवमेकं दत्वा वारत्रयं चरुं गृहीत्वा पुनश्चरौ स्रुवमेकं जुहूाञ्च पुनः स्रुवमेकं दत्वा वक्ष्यमाणमन्त्रैर्होमयेत् ।

यथा हयशीर्षे,—

कुण्डेषु होमयेत् पूर्व्वविधिना समिदादिकम् ।
वेदादिमन्त्रैः पश्चाच्च चरुं कुर्व्वीत वारुणम् ॥

---

१ ख पुस्तके, —द्वयम् ।
२ ख पुस्तके, घटसम्पात ।

पूर्व्वविधिना विष्णुप्रतिष्ठोक्तविधिना समिदादिकमित्यादि-शब्दात्तिलघृतपरिग्रहः ।

तथा,—

गङ्गाद्या धेनवः स्थाप्याश्चतुर्द्दिक्षु यथाविधि ।
गङ्गा च यमुना गोदावरी चैव सरस्वती ॥
गायत्र्या तु दुहेद्गावः श्रपेद्यवमयं चरुम् ।
त्वन्नो अग्ने वरुणेति[१] अभिघार्य्यावतारयेत् ॥
व्याहृत्या विधिवद्धुत्वा मन्त्रैरेभिस्तु होमयेत् ।
गायत्र्या होमयेच्चापि मूलमन्त्रेण चाप्यथ ॥

ॐ सूर्य्याय स्वाहा ॐ प्रजापतये स्वाहा ॐ द्यौः स्वाहा ॐ अन्तरीक्षाय स्वाहा ॐ पृथिव्यै स्वाहा ॐ दृहरत्यै स्वाहा ॐ उग्राय स्वाहा ॐ भीमाय स्वाहा ॐ महारुद्राय स्वाहा ॐ विष्णवे स्वाहा ॐ वरुणो मातरन्वयमायस्योषाय स्वाहा ॐ इन्द्राय स्वाहा ॐ अग्नये स्वाहा ॐ यमाय स्वाहा ॐ नैर्ऋताय स्वाहा ॐ वरुणाय स्वाहा ॐ वायवे स्वाहा ॐ कुवेराय स्वाहा ॐ ईशानाय स्वाहा ॐ अनन्ताय स्वाहा ॐ ब्रह्मणे स्वाहा ॐ महाराजाय स्वाहा ।

इदं विष्णुरिति जुहुयात् तद्विप्रासेति वै बुधः ।
सोमो धेन्विति षड् कृत्वा इमम्मेति च होमयेत् ॥
आपोहिष्ठेति तिसृभिरिमा रुद्रेति होमयेत् ।

---

१. मूलपुस्तके, त्वन्नो वरुणमन्त्रेण अभिघार्य्यावतारयेत् ।

तत आज्येन महाव्याहृतिहोमं कृत्वा होमं समाप्य चरुशेषेण दशदिक्षु बलिं दद्यात्। ततः पुनर्देवं गन्धपुष्पधूपदीपनैवेद्यमाल्यैः पूजयेत्।

यथा हयशीर्षे,—

दशदिक्षु बलिं दद्यात् गन्धपुष्पादिनार्च्चयेत्।
कर्त्ता च दैशिके दद्यादधिवासनदक्षिणाम्॥
सुवर्णसहितं पात्रं तिलैः पूर्णं सवस्त्रकम्।
ब्रह्मणे कनकं दद्यान्मूर्त्तिपेभ्यस्तथैव गाः।
दैशिकः कर्त्तृणा सार्द्धं नयेद्रात्रिं हविष्यभुक्॥

इत्यधिवासविधिः।

अथ प्रातर्निर्वर्त्तितनित्यकृत्यो यजमानः,—

अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके।
पुंसवने निषेके च नववेश्मप्रवेशने॥
सेतुवृक्षजलादीनां प्रतिष्ठासु विशेषतः।
तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम्॥

इति मत्स्यपुराणवचनात् मातृपूजां वृद्धिश्राद्धञ्च निर्व्वर्त्त्य स्वस्ति वाच्य संकल्पं कुर्य्यात्।

ॐ अद्येत्यादि सर्व्वकामसुसम्पूर्णवैदूर्य्यमणिभूषितसौवर्णकामग दिव्यस्त्रीशतसङ्कुलशक्रलोकावस्थितविमानप्राप्ति नष्टकिल्बिषत्व भूत-निषेवितवैवस्वतपुरानभियान मन्वन्तरावच्छिन्नशक्रलोकवास तदन्तर-पूर्व्वलक्षणसम्पन्नसर्व्वैश्वर्य्यसमन्वितपृथिवीपालद्विजोत्तमान्यतरत्वकामो हयशीर्षपञ्चरात्रोक्तविधिना वाप्यादिजलाशयप्रतिष्ठाकर्म्माहं करिष्ये।

गुरुर्यजमान इति पठित्वा ॐ उत्तिष्ठेति प्रतिमामुत्थाप्य तत्र गर्भितार्द्धचन्द्रमण्डले स्थापयित्वा गन्धपुष्पादिभिः पूर्व्ववत् पूजयित्वा हेमपुष्पाञ्जलिं दत्वा जलाशयाष्टदिक्षु सिकतामयान् हस्तप्रमाणानष्टौ स्थण्डिलान् कृत्वा कुण्डादग्निमानीय ॐ वरुणस्येति मन्त्रेण प्रत्येकमाज्येनाष्टोत्तरशतं हुत्वा पुनरपि कुण्डे यवमयं चरुं कृत्वा वरुणस्येति मन्त्रेणाष्टौ आहुतीर्हुत्वा वरुणकलसे शान्तितोयं कृत्वा ॐ श्रीश्च ते इति देवमभिषिञ्चेत्।

हयशीर्षे,—

ततः प्रभातसमये कृतरक्षः कृताह्निकः।
प्रतिमान्तु समुत्थाप्य मण्डले विन्यसेद्बुधः॥
पूजयेद्गन्धपुष्पाद्यैर्हेमपुष्पादिभिः क्रमात्।
जलाशयाष्टदिग्भागे वितस्तिद्वयसम्मितान्॥
कृत्वाऽष्टौ स्थण्डिलान् रम्यान् सैकतान् देशिकोत्तमः।
वरुणस्येति मन्त्रेण आज्यमष्टशतं बुधः॥
जुहुयात् कारयेद्देवचरुं यवमयं पुनः।
चरुं कृत्वा विधानेन शान्तितोयं समारभेत्[१]॥

शान्तितोयप्रकार उक्तस्तत्रैव,—

तत्र पीठे समारोप्य स्नापयेत्कुद्धवारिणा।
देवकुम्भे शान्तितोयं कुर्य्यात्तत्र विचक्षणः॥
मन्त्रयेत् शतधारांश्च मूलमन्त्रेण देशिकः।

---

१ मूलपुस्तके, समाचरेत्।

सेचयेद्देवतामूर्द्धि श्रीस्वतेत्यनयानघ[१] ॥ ७

ततः शुक्लवाससा जलमपनीय पुनर्मण्डले स्थापयित्वा भूतशुद्धि-मातृकान्यासपीठन्यासान् विधाय पूर्व्ववद्देवं चिन्तयित्वा मनसा पाद्यादिभिः सम्पूज्य प्राणायामत्रयं कृत्वा अर्घ्यपाद्याचमनीयानि स्थापयित्वा पुनर्भगवन्तं वरुणं विचिन्त्य वरुणामापुटेन निःसार्य्य प्रतिमायां वैाँ इति मूलमन्त्रेण स्थापयित्वा ॐ वरुणस्येति सान्निध्यं कृत्वा प्राणप्रतिष्ठां कुर्य्यात्।

हृदये हस्तं दत्वा वौमिति मूलमन्त्रमष्टधा जप्त्वा ॐ आँ ह्रीँ क्रौँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः श्रीवरुणस्य प्राणा इह प्राणाः। आँ ह्रीँ क्रौँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः श्रीवरुणस्य सर्व्वेन्द्रियाणि। आँ ह्रीँ क्रौँ यँ रँ लँ वँ शँ षँ सँ हँ हंसः श्रीवरुणस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।

हयशीर्षे,—

सजीवकरणं कृत्वा ध्यायेत् सकलनिष्कलम्।
प्रशान्तवदनं सौम्यं हिमकुन्देन्दुसन्निभम् ॥
सर्व्वाभरणसंयुक्तं सर्व्वलक्षणलक्षितम्।
किरणैः शीतलैः सौम्यैः प्रीणयन्तमिव स्थितम् ॥
लावण्यामृतधाराभिस्तर्पयन्तमिव प्रजाः।
राजहंससमारूढ़ं पाशव्यग्रकरं शुभम् ॥
पुष्कराद्यैः सुतैः सर्व्वैः समन्तात् परिवारितम्।

१ ख पुस्तके, अनया ऋचा।

गौर्य्या लक्ष्म्या चानुगतं नदीभिः परिवारितम् ॥
नागैर्यादोगणैर्युक्तं ब्रह्माणमिव चापरम्।
सृष्टिसंहारकर्त्तारं नारायणमिवापरम्[१] ॥
मूलेनैव स्थितिं कृत्वा प्रणवेन निवेदयेत्।
पूजयेद्गन्धपुष्पाद्यैः सान्निध्यं पाशमुद्रया ॥

मूलमन्त्रेण षोड़शोपचारैः सम्पूज्य पुष्पाञ्जलिं दत्वा अनन्ताद्यष्ट-नाग कूर्म्म-मकर-मत्स्य-डूण्डुभ-कुलीर-मण्डूक-शिशुमार समुद्रादी-नपि गन्धपुष्पाद्यैः पूजयेत्। ॐ उत्तिष्ठेति मन्त्रेण अनन्ताद्यष्टनाग-सहितं सयूपं वरुणमुत्थाप्य जलाशयस्याभितो भ्रामयेत्।

हयशीर्षे,—

उत्थापयेद्देवदेवं शङ्खतुर्य्यादिनिस्वनैः।
गीतवादित्रनिर्घोषैः काहलादुन्दुभिस्वनैः ॥
नागपृष्ठे समारोप्य रथे वा भ्रामयेत् पुरम्।
प्रदक्षिणेन देवेशं सर्व्वशोभासमन्वितम् ॥
त्रिकृत्वः सप्तकृत्वो वा स्वमथो सलिलाशयम्।
परिभ्राम्य समानीय पश्चिमायां दिशि द्विजः ॥
आपोहिष्ठेति मन्त्रेण ब्रह्मघोषादिना गुरुः।
अनन्ताद्यष्टनागादिपरिवारयुतं ततः ॥
त्रिमध्वक्ते घटे कृत्वा ताम्रे रौप्येऽथ मृन्मये।
जलाशयस्य मध्ये तं सुगुप्तं विनिवेशयेत् ॥

---

१ ख पुस्तके, अथापरम्।

निक्षिप्य वरुणं ध्यायेत् देशिकः सुसमाहितः।
निर्दग्धां सकलां सृष्टिमिमां ब्रह्माण्डसंस्थिताम्॥
अग्निबीजेन मन्त्रज्ञो भस्मकूटमिव स्थिताम्।
घनं विचिन्त्य बीजेन प्लावयेद्वारिणा पुनः॥
सर्व्वमापोमयं लोकं ध्यायेत्तत्र जलेश्वरः।
पूर्व्वरूपेण मन्त्रज्ञस्तोयमध्ये व्यवस्थितम्॥
ततो निमज्जयेत्तत्र तड़ागे कारकः शुचिः।
कूपोदकेषु न स्नायात् पुष्करिण्यां निमज्जयेत्।
ब्राह्मणैर्वैष्णवैः सार्द्धं यजमानः सबान्धवः॥

स्नानं तत्र तर्पणान्तं यथाविधि कार्य्यम्।

तथा,—

ततो निवेशयेद्यूपं खदिरादि[1]तरूद्भवम्।
चतुरस्रमथाष्टास्रं वर्त्तुलं वा सुवर्त्तितम्॥
जलमध्येऽथवा यागमण्डपस्याजिरे गुरुः।
यूपब्रस्केति मन्त्रेण स्थाप्य वस्त्रेण वेष्टयेत्॥
वैजयन्तीं सितां रम्यां यूपोपरि निवेशयेत्।
गन्धादिभिः पूजयित्वा नमस्कुर्य्यात् पुनः पुनः॥

ततो धेनुं जलाशयं सन्तारयेत्।

मत्स्यपुराणे,—

वेदशब्दैश्च गान्धर्व्वैर्वाद्यैश्च विविधैः पुनः।

---

१ ख पुस्तके, खादिरादि।

कनकालङ्कृतां कृत्वा जले गामवतारयेत् ॥
सामगाय तु सा देया ब्राह्मणाय विशाम्पते ।

ततो ब्राह्मणभोजनचयमुत्सृज्य जलाशयं समुत्सृजेत् । ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकशर्म्मा सर्व्वकामसुसम्पूर्णवैदूर्य्यमणिभूषितसौवर्णकामगदिव्यस्त्रीयानसङ्कुलब्रह्मलोकावस्थितविमानप्राप्तिनष्टकिल्बिषत्व-भूतनिषेवितवैवस्वतपुरानभियानमन्वन्तरावच्छिन्नब्रह्मलोकवास तदन्तरसर्व्वलक्षणसम्पन्नसर्व्वैश्वर्य्यसमन्वित पृथिवीपालद्विजोत्तमान्यतरत्वकामो वाप्याद्याख्यमिमं चतुःसेत्ववच्छिन्नं वरुणदैवतं जलाशयं सर्व्वभूतेभ्योऽहं ददे ।

हयशीर्षे,—

भोजयित्वा द्विजान् सम्यक् तोयमुत्सर्जयेत्ततः ।
सर्व्वान् भूतान् समुद्दिश्य इति वाचं समुच्चरेत् ॥
आब्रह्मस्तम्बपर्य्यन्तं ये केचित् सलिलार्थिनः ।
ते तृप्तिमुपगच्छन्तु तड़ागस्थेन वारिणा ॥

तत्र तड़ागपदस्थाने पुष्करिण्यादिपदोहो न कार्य्यः प्रकृतावूहकल्पनाया अयोगात् विकृतावेव हि तत्सम्भवात् । अजहत्स्वार्थलक्षणया तड़ागपदस्य जलाशयपरत्वेनान्वयसम्भवात् ।

ततः पूर्णां दत्त्वा दक्षिणां दद्यात् ।

तथा,—

अवधार्य्य जगच्छान्तिं दद्यादाचार्य्यदक्षिणाम् ।
वस्त्राद्यैः पूज्य भक्त्या च कर्त्ता शाठ्यविवर्ज्जितः ॥
भूमिं भूमिपतिर्दद्यादितरो गामलङ्कृताम् ।

हेमश्टङ्गीं मूर्त्तिपेभ्य आज्यपात्रं सकाञ्चनम् ॥
द्विजेभ्यो दक्षिणा देया पूजयेदागतांस्तथा ।
अनिवारितमन्नाद्यं सार्व्वजन्यञ्च कारयेत् ॥

तथा,—

आपोहिष्ठेति तिसृभिः पञ्चगव्यं विनिक्षिपेत् ।
तीर्थतोयं तथा पुण्यं शान्तितोयं द्विजैः कृतम् ॥
गोकुलं पाययेत् पश्चात् द्विजान् वेदविदस्तथा ।

ततो गुरुरग्निं विसृज्य ॐ यज्ञेन यज्ञमिति देवान् विसर्ज्जयेत् ततोऽच्छिद्रं कुर्य्यात् ।

हयशीर्षे,—

नास्ति तोयसमं दानं त्रैलोक्ये सचराचरे ।
तस्मात् सर्व्वप्रयत्नेन जलदानं समाचरेत् ॥
कूपवापीतड़ागाद्यमतो दद्यात् स्वशक्तितः ।
वित्तानुसारतः प्राज्ञः प्रपाश्चैव प्रवर्त्तयेत् ॥
अप्येकं पूरयित्वा तु निदाघे वारिणा घटम् ।
जलदानन्तु कुर्व्वीत सर्व्वकामसमृद्धिदम् ॥

इति हयशीर्षोक्तजलाशयप्रतिष्ठापद्धतिः ॥

---

## अथ वारुणविधिः ।

तड़ागादिवदुत्सृष्टं विधिवच्छ्रद्धयान्वितैः ।
पितृदेवमनुष्याणां तज्जलं त्वभिनन्दितम् ॥
अनुत्सर्गितवापीनामपेयं सलिलं भवेत् ।

इति देवीपुराणे ।

उत्सृष्टन्तु भवेत्पूतमनुत्सृष्टन्तु मूत्रवत् ।

इति भविष्ये अनुत्सृष्टवाप्यादीनामव्यवहार्य्यतोक्ता अव्यवहार्य्यत्वे च निष्फलत्वापत्तिरित्याकाङ्क्षायां—

कल्पतरुधृतगृह्यपरिशिष्टम् यथा,—

अथातो वारुणविधिं वापीकूपतड़ागयज्ञं व्याख्यास्यामः । पुण्ये तिथिकरणे शुभे नक्षत्रे प्रतीचीं दिशमवस्थाय प्राक्प्रवण उदक्प्रवणे वा कूपसमीपे अग्निमुपसमाधाय वारुणं चरुं श्रपयित्वा आज्यभागान्तं कृत्वा आज्याहुतीर्जुहुयात् ।

समुद्रज्येष्ठा इति प्रत्यृचं ततो हविषाष्टाहुतीर्जुहुयात् ।

तत्त्वायामि ब्रह्मणा वन्दमान इति पञ्च ।

त्वन्नोऽग्ने वरुणस्य विद्वानिति द्वे ।

इममे वरुणप्रधीति च स्विष्टकृतञ्च नवमं ।

नव वै प्राणाः प्राणा वै आपस्तस्मादपो नवभिर्जुहोति ।

मार्ज्जनान्ते धेनुं तारयेत् । अवतीर्य्यमाणामनुमन्त्रयेत्,—

ॐ इदं सलिलं पवित्रं कुरुष्व शुद्धः पूतोऽमृतः सन्तु नित्यम् ।
तारयन्ती सर्व्वतीर्थाभिषिक्तं लोकालोकं तरते तीर्य्यते च ॥

पुच्छाग्रे स्वयं लग्नोऽवारभ्य उत्तीर्य्य—

ॐ आपो अस्मान् मातरः शुन्धयन्त्वित्यनया अपराजितायां दिश्युत्थापयेत्।

ॐ सूयवसाद्भगवती हि भूयां अथो वयं भगवन्तः स्याम।

अद्धि तृणमघ्न्ये विश्वादानीं पिव शुद्धमुदकमाचरन्ती॥

हिङ्कृते चेत्— ॐ हिङ्कृण्वती वसुमती वसूनामिति।

सघण्टकण्ठां काञ्चनशृङ्गीं वृषप्रज्ञां रौप्यखुरां ताम्रपृष्ठां कांस्योपदोहां विप्राय दद्यादितरां वा। यथाशक्ति दक्षिणा च। तत उत्सर्गं कुर्य्यात्।

देवा मनुष्याश्च प्रीयन्तामिति यश्चोत्सृजेदिति शौनकः। ब्राह्मणान् भोजयित्वा स्वस्त्ययनं वाचयेदिति।

वापीकूपतड़ागयज्ञमित्यनेन,—.

उत्सवानन्दसन्तानैः यज्ञोद्वाहादिमङ्गले।

इति मत्स्यपुराणवचनात् वृद्धिश्राद्धमत्र दर्शितम्।

एतेन वरुणप्रतिमास्थापनाभावात् प्रतिष्ठापदानभिधेये जलाशयोत्सर्गमात्रे कथं वृद्धिश्राद्धमिति भ्रमो निरस्तः।

वारुणं चरुमिति यद्वेनेति शेषः वारुणं यवमयं स्थालीपाकं श्रपयित्वेति कात्यायनपरिशिष्टैकवाक्यात्? आज्यभागान्तमिति आज्यभागान्तं कर्म्म कृत्वा समुद्रज्येष्ठा इत्यादिसूक्ते यावत्य ऋचस्तासां प्रत्यृचं आज्याहुतीर्जुहुयादित्यर्थः।

तत्र,—

समुद्रज्येष्ठा सलिलस्येति प्रथमा ऋक्।

इदमाप: प्रवहतेति द्वितीया।

आपोऽस्मान्मातर इति तृतीया।

उरुं हि राजेति चतुर्थी।

वरुणस्योत्तम्भनमसीति पञ्चमी।

यासां राजेति षष्ठीति।

ततो हविषाव्याहृतीर्जुहुयादिति। तत आज्यहोमानन्तरमष्टाभिर्वक्ष्यमाणाभिर्ऋग्भिर्हविषा पूर्व्वश्रपितयवचरुणापि जुहुयादित्यर्थ:।

न च हवि:पदेनात्र घृतमुच्यते अनन्तरोक्ताव्याहृतीर्जुहुयादित्यनेनैव प्राप्तौ ततो हविषेति वैयर्थ्यापत्ते: प्राक्श्रपितचरोर्होमान्तरानभिधानादनियुज्यमानत्वापत्तेश्च।

अष्टौ ऋचो विवृणोति। तत्त्वायामीत्यादि।

त्वन्नोऽग्ने। सत्वन्नोऽग्ने। इमं मे वरुणम्। तत्त्वायामि। ये ते शतम्। अयाश्चाग्ने। उदुत्तमं। उरुं हि राजा। इत्यष्टौ।

इति कात्यायनसूत्रोक्तेषु अष्टवरुणहोमेषु यास्तत्त्वायामीत्यादय: पञ्च ऋचस्ता: प्रथमं होतव्या:।

यथा,—

ॐ तत्त्वायामीति। ॐ ये ते शतमिति। ॐ अयाश्चाग्ने इति। ॐ उदुत्तममिति। ॐ उरुं हि राजेति। पञ्च।

तत:,—

ॐ त्वन्नोऽग्ने इति। ॐ सत्वन्नोऽग्ने इति द्वे।

पश्चात् इमं मे वरुणमिति मिलित्वा अष्टौ।

ॐ अग्नये स्विष्टिकृते स्वाहेति नवमं जुहुयादित्यर्थः।

तत्र नवाहुतिषु हेतुमाह नव वै प्राणा इति।

वै त्वयं प्रसिद्धौ देहे नवच्छिद्रप्रचारित्वान्नव प्राणवायवो भवन्ति तेन नवप्राणा आप एव अग्निस्तर्पणेन प्राणानां स्थितिमत्त्वादित्यर्थः। एतेन नवसंख्याभिधानेन होमान्तरव्युदासः कृतः सर्व्वहोमान्तविहितस्य स्विष्टिकृद्धोमस्य नवमत्वाभिधानाच्च।

मार्ज्जनान्त इति।

> ग्रत्र आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम्।
> एतैरब्दैवतैर्मन्त्रैर्मार्ज्जनं समुदाहृतम्॥

इति वचनोक्ताभिर्ऋग्भिः कुशैर्जलबिन्दुप्रक्षेपरूपमार्ज्जनं तच्च गुरुकर्त्तृकं यजमानकर्म्मकम्।

धेनुरत्र पुंवत्सा वृषप्रजेत्यग्रतोऽभिधानात्। यद्यप्यत्र वरुणप्रतिमास्थापनामभिधानात् जलशुद्धिर्नाभिहिता तथापि इदं सलिलं पवित्रं कुरुष्वेति सूत्रोक्तमन्त्रलिङ्गात् धेनुसन्तरणेनैव जलशुद्धिर्ज्ञातव्या। स्वयं यजमानोऽन्वारब्धो गुरुणेत्यर्थः। आपोऽस्मान्मातर इति मन्त्रेण जलाशयमुत्तीर्य्य इत्यन्वयः। अपराजितायामैशान्यां दिशि सूयवसादितिमन्त्रेण धेनुमुत्थापयेदित्यन्वयः।

कूपे तु गोसन्तरणं नास्ति अयोग्यत्वात् किन्तु तत्समीपे तां भ्रामयित्वा मन्त्रेणाभिमन्त्रणं कार्य्यम्।

हिंकृतश्चेदिति यदि सा धेनुर्हिं कुरुते तदा यजमानः प्रायश्चित्तरूपतया हिं कृण्वतीति मन्त्रं जपेदित्यर्थः। सामगाय विप्राय तां दद्यात्।

यथा मत्स्यपुराणे,—

सामगाय तु सा देया ब्राह्मणाय विशाम्पते। इति।

इतरां चेति केवलमनलङ्कृतामगन्धौ दद्यादित्यर्थः। नत इति उत्सर्गं जलाशयस्येत्यर्थ। स चोत्सर्गः सर्व्वभूतोद्देश्यक एव।

भोजयित्वा द्विजान् सम्यक् तोयमुत्सर्ज्जयेत्ततः।
सर्व्वभूतान् समुद्दिश्य इति वाचं समुच्चरेत् ॥
आब्रह्मस्तम्बपर्य्यन्तं ये केचित् सलिलार्थिनः।
ते तृप्तिमुपगच्छन्तु तड़ागस्थेन वारिणा ॥

इति हयशीर्षवचनात्।

यद्यपि वारुणविधौ फलं नोक्तं तथापि काम्यत्वेन फलाकाङ्क्षाया विश्वजिन्न्यायादश्रुतस्वर्गकल्पने गौरवात् नन्दिपुराणादौ श्रुतमेव फलं ग्राह्यम्।

यथा नन्दिपुराणे,—

यो वापीमग्निसाक्ष्येण विधिवत् प्रतिपादयेत्।
कोणेषूदकसंस्थांस्तु समुद्रानर्च्च्य भक्तितः ॥
चतुरस्रतुरर्णान्ता तेन दत्ता मही भवेत्।
स याति वारुणं लोकं दिव्यकामसमन्वितम् ॥

जलाशयकोणेषु जलसंस्थांश्चतुरः समुद्रानर्च्चयित्वा अग्निसाक्ष्येण कुण्डस्थापिताग्निहोमेन विधिवत् वारुणादिविधिना यः प्रतिपादयेत् स चतुरर्णवान्तमहीदानफलं लभते दिव्यकामसमन्वितवरुणलोकञ्च यातीत्यर्थः। चतुरर्णान्तेति वलोप आर्षः। एतच्च फलद्वयं समुचितं न तु पृथक्। तेनेति स यातीत्येककर्त्तृकनिर्द्देशात्।

इत्यत्र चतुरर्णवान्तमहीदानफलसमफल-स्वर्गदिव्यकामसमन्वित वरुणलोकप्राप्तिकाम इति वाक्यं। एवमुत्सृज्य देवा मनुष्याश्च प्रीयन्तां यश्चोत्सृजेत् सोऽपि प्रीयतामिति वदेत्। अयश्च प्राधान्येन निर्देशः। हयशीर्षे सर्वभूतान् समुद्दिश्येति सामान्यतोऽभिधानात् सामान्याभिलाप एव न्याय्यः।

अन्ये तु—यश्चोत्सृजेत् सोऽनेन वाक्येन उत्सृजेदिति व्याचक्षते। इति शौनक इति आहेति शेषः। ब्राह्मणान् भोजयित्वेति कर्म्मान्ते ब्राह्मणभोजनमुक्तं स्वस्त्ययनं स्वस्त्यस्त्विति पुण्याहमस्त्विति ऋद्धिरस्त्विति च त्रयं ब्राह्मणान् वाचयेत्

ब्राह्मणान् भोजयेद्दत्वा पुण्याहं वाचयेत्ततः।

इति आथर्व्वणपरिशिष्टवचनात्।

ऋग्वेदिनामेवायं विधिः बह्वृचगृह्योक्तत्वात् यजुर्वेदिनान्तु कात्यायनपरिशिष्टोक्तविधिरेव स्वगृह्योक्तत्वात्। सामगानामपि स्वगृह्ये विशेषानभिधानात् आकाङ्क्षितत्वाच्च स्वगृह्योक्तसमानतन्त्रत्वेन कात्यायनपरिशिष्टोक्त एव विधिः।

कात्यायनपरिशिष्टं यथा,—

अथातो वापीकूपतड़ागपुष्करिणीनां प्रतिष्ठापनं व्याख्यास्यामः, उदगयने आपूर्य्यमाणपक्षे पुण्याहे तिथिकरणे नक्षत्रे च गुणान्विते वारुणं यवमयं स्थालीपाकं श्रपयित्वा नवग्रहान् दिग्देवान् वरुणञ्च स्थापयित्वा आज्यभागाविष्ट्वा आज्याहुतीर्जुहोति।

त्वन्नोऽग्ने। सत्वन्नोऽग्ने। इमं मे वरुणम्। तत्वायामि। ये ते शतम्।

अयाश्चाग्ने। उदुत्तमं। उरुं हि राजा। वरुणस्योत्तम्भनमसि। अग्नेरनीकमिति दशर्चं।

स्थालीपाकस्य जुहोति—ॐ नमो वरुणाय स्वाहा यज्ञाय स्वाहा उग्राय स्वाहा भीमाय स्वाहा शतक्रतवे स्वाहा स्वर्गाय स्वाहेति स्विष्टकृतं यथोक्तञ्च वासोयुगं धेनुर्दक्षिणेति।

प्रतिष्ठापनं सविधिकोत्सर्जनमित्यर्थः। प्रतिष्ठापनमित्यभिधानात् तद्धर्म्मवृद्धिश्राद्धमत्र दर्शितम्। आपूर्य्यमाणपक्षे शुक्लपक्षे पुण्याहे शुक्रास्तादिदोषरहितदिने। गुणान्विते अदुष्टे तिथ्यादिकिके वारुणमित्यनेन वरुणनाम्ना ग्रहणनिर्वपणप्रोक्षणानि कृत्वा वरुणमन्त्रेणाभिमन्त्रणं कार्य्यमित्युक्तं। स्थालीपाकं श्रपयित्वा ग्रहान् दिग्देवान् वरुणञ्च स्थापयित्वा॰आज्यभागाविष्टेति क्त्वाभिधानात् पर्य्युक्षणात् परमाज्यभागहोमात् प्राक् ग्रहादीनां स्थापनमवगम्यते स्थापनस्य च पूजाङ्गत्वात् प्रधानभूतपूजाक्षिप्यते तत आघाराज्यभागौ कृत्वा आज्येन दशाहुतीश्चरुणा च षड़ाहुतीः स्विष्टकृतञ्च जुहुयादित्यर्थः।

अत्र च बह्वृचगृह्यात् होममात्रे विशेषः। यथोक्तञ्चेति प्रतिष्ठापनं व्याख्यास्याम इत्यनेन प्रतिज्ञातं सविधि[1]जलाशयोत्सर्जनं कुर्य्यादित्यर्थः। विधिस्तु मार्जनान्ते धेनुं तारयेदित्यादिना प्रागुक्तबह्वृचगृह्यपरिशिष्टसूत्रोक्तो ग्राह्यः स च॰ मार्जनधेन्ववतारणकृतजलशुद्धिपूर्व्वको जलाशयोत्सर्गः॰। ततस्तद्दक्षिणा वासोयुगं धेनुश्च देयेत्यर्थः।

---

१ ख पुस्तके, सावधि—।

तदथं कात्यायनपरिशिष्टोक्तवारुणकल्पप्रयोगः।

तत्र प्रथमं जलाशयस्य पश्चिमदिशि कूपे दशहस्तं वाप्यां द्वादशहस्तं पुष्करिण्यां चतुर्द्दशहस्तं तड़ागे षोड़शहस्तं मण्डपं कृत्वा तन्मध्ये अर्द्धभागेन चतुरस्रां वेदीं तदष्टांशोच्छ्रितां कृत्वा—

पश्चिमदिशि हस्तमात्रं चतुरस्रकुण्डं यथाविधि कुर्य्यात्।

यूपञ्च चतुरस्रमष्टास्रं वर्त्तुलं वा खदिरादियज्ञियवृक्षजं मूले फणाकारं कूपे दशहस्तं वाप्यां पञ्चदशहस्तं पुष्करिण्यां विंशतिहस्तं तड़ागे पञ्चविंशतिहस्तं अतिगम्भीरविस्तारयुक्ते तु यथाशोभं कुर्य्यात्। ध्वजवंशञ्च यथाशोभं शुक्लपताकाञ्च लौहचक्रं षोड़शाङ्गुलमष्टास्रं मध्ये नरसिंहमूर्त्त्यन्वितं कुर्य्यात्।

ततः शुद्धकाले शुभदिने निर्वर्त्तितनित्यकृत्यो यजमानः मातृपूजा-वसुधारादान-वृद्धिश्राद्धानि कृत्वा स्वस्ति वाच्य संकल्पं कुर्य्यात्।

अद्येत्यादि अमुकगोत्रोऽमुकशर्म्माहं चतुरर्णवान्तमहीदान-फलसमफल-दिव्यकामसमन्वितवरुणलोकप्राप्तिकामो वारुणविधिना जलाशयोत्सर्गकर्म्म करिष्ये। इति संकल्प्य ब्राह्मणत्रयमुदङ्मुख-मुपवेश्य गन्धपुष्पादिभिरभ्यर्च्च्य—

पुण्याहं भवन्तो ब्रुवन्त्विति प्रार्थयेत्।

ते च ॐ पुण्याहमिति ब्रूयुः। ततः स्वस्ति भवन्तो ब्रुवन्त्विति प्रार्थयेत् ते च स्वस्तीति त्रिर्ब्रूयुः। तत ऋद्धिं भवन्तो ब्रुवन्त्विति प्रार्थयेत् ते च ऋद्ध्यतामिति त्रिर्ब्रूयुः।

तत आचार्य्यं ब्रह्माणं सदस्यञ्च आसन-पाद्यार्घ्याचमनीय-मधुपर्क वासोयुगालङ्कारैर्वृणुयात् ।

ततो गुरुः, पञ्चगव्यं साधयित्वाभिमन्त्र्य कुशत्रयेण मण्डपं वेदीञ्च—

ॐ वेद्या वेदी समाप्यते वर्हिषा वर्हिरिन्द्रियम् ।

यूपेन यूप आरोप्यते प्रणीतोऽग्निरग्निना ॥

इति मन्त्रेण संप्रोक्ष्य शेषपञ्चगव्यं वाय्यादौ प्रक्षेपार्थमवस्थापयेत् । ततो वेद्यां पञ्चवर्णरजोभिः सर्व्वतोभद्रमण्डलं लिखेत् । तत्र,—

गणेशं विघ्ननाशाय पूजयित्वा हरिं यजेत् ।

विष्णुं यो नार्च्चयेदादौ तत्कर्म्म विफलं भवेत् ॥

इति वचनात् वेद्यामेकस्मिन् घटे गणेशमभ्यर्च्य अपरघटे विष्णुमभ्यर्च्चयेत् ।

ततः कुण्डसंस्कारं कुर्य्यात् ।

रौँ अस्त्राय फड़िति प्रोक्षणं तेनैव दर्भैस्ताड़नं हुमिति पुनरभ्युक्षणं कृत्वा पञ्चगव्येनाभिषिच्य,—

ॐ एष वः कुरवो राजैषवः पञ्चाला राजा ।

सोमोऽस्माकं ब्राह्मणानां राजा ।

इति मन्त्रेण कुशान् गृहीत्वा ।

ॐ यद्देवा देवहेड़नं देवा सश्चकृमा वयम् ।

अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ॥

इति मन्त्रेण मार्जनरूपं परिसमूहनं कृत्वा,—

ॐ मानस्तोके तनये माम आयुषि मानो

गोषु मानो अश्वेषु रीरिषः।
मानो वीरान् रुद्रभामिनोवधी
र्हविष्मन्तः सदमित्वा हवामहे ॥

इति मन्त्रेण गोमयेनोपलिप्य

ॐ त्वां हृच्चेष्विन्द्र सत्पतिं नवस्त्वां काष्ठास्वर्व्वतः।

इति कुशमूलेनोत्तराग्रामेकविंशत्यङ्गुलप्रमाणां रेखां कृत्वा तदुपरि द्वादशाङ्गुलप्रमाणं सप्तसप्ताङ्गुलान्तरितं प्रागग्रं ब्रह्मरुद्रेन्द्रदेवताकं रेखात्रयं कृत्वा।

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं सनिं मेधामयाशिषाम्।

इति मन्त्रेण रेखोत्कीर्णमृत्तिकामुद्धृत्य उत्तरस्यां दिशि प्रक्षिपेत्।

ॐ अथो अस्मस्तु कीनाशमुपह्वतो गृहेषु नः।
क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयोः।

इति मन्त्रेण पञ्चगव्येनाभ्युक्ष्य।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।
इति मन्त्रेण कुण्डे कुशानास्तीर्य्य कांस्यपात्रेणाग्निमानीय—

ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः।

इति मन्त्रेण ज्वलदिन्धनमेकं दक्षिणस्यां दिशि त्यक्त्वा रं अग्नये नम इति सम्पूज्य जानुद्वयं भूमौ पातयित्वा—

ॐ इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्।

इति मन्त्रेण कुण्डस्योपरि त्रिः परिभ्राम्य—

ॐ भूर्भुवः स्वरिति मन्त्रेणात्मनोऽभिमुखं कृत्वा अग्निं स्थापयेत्।

ॐ चित् पिङ्गल हन हन दह दह पच पच सर्व्वंज्ञाज्ञापय स्वाहा । इति मन्त्रेणाग्निं प्रज्वालयेत् ।

ॐ इहैदग्नि सञ्चोदतस्तिष्ठाम्यस्य सदन आसीद ।

इति दक्षिणावर्त्तनावच्छिन्नधारया गत्वा दक्षिणदिशि आसने प्रागग्रकुशानास्तीर्य्य ।

ॐ निरस्तः पाप्माहतस्तेन वयं द्विष्मः ।

इति मन्त्रेण वामहस्तानामिकाङ्गुष्ठाभ्यां कुशमेकं निरस्य ।

ॐ इदमहम् बृहस्पते सदसि सीदामि ।

प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि ।

तद्वायवे.. तत् पृथिव्यै ।

इति मन्त्रेण कुशोपरि ब्राह्मणमुत्तरामुखमुपवेश्य,—

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्च्चसी जायतामाराष्ट्रे राजन्यः ।

शूरं इषव्योतिव्याधीमहारथो जायताम् ।

इति मन्त्रेणाभिमन्त्र्य सम्पूज्य च ब्राह्मणाभावे कुशमयं ब्राह्मणं संस्थाप्य तेनैव पथा प्रत्यागच्छेत् ।

उत्तरे जलपूर्णं चमसादिपात्रं प्रणीतासंज्ञकमापोहिष्ठेतिमन्त्रेण स्थापयित्वा,—

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्याम् । इति मन्त्रेण षोड़शभिर्द्वादशभिर्वा दर्भैरीशानादितोऽग्रेण मूलमाच्छादयन् चतुर्द्दिक्षु द्वितीयमेखलोपरि परिस्तरेत् ।

तत उत्तरे पश्चिमान्तात् प्रागन्तं यावत् कुशोपरि होमद्रव्यासादनं पवित्रच्छेदनास्त्रयो दर्भाः पवित्रे द्वे प्रोक्षणीपात्रमाज्यस्थाली

चरुस्थाली सम्मार्ज्जनकुशाः षट् उपयमनकुशाः पञ्च समिधः स्रुक्-स्रुवौ आज्यं दुग्धं यवतण्डुलाः ब्रह्मदक्षिणा।

ॐ पवित्रे स्थो वैष्णव्यौ "इति मन्त्रेण पवित्रच्छेदनदर्भैः प्रादेशप्रमाणं पवित्रं छित्वा "ॐ विष्णोर्मनसा पूते स्थः" इत्यभ्युक्ष्य प्रोक्षणीपात्रे पवित्रं स्थापयित्वा प्रणीताजलेन प्रोक्षणीं पूरयित्वा वामहस्ते प्रोक्षणीं स्थापयित्वा तत् पवित्रं दक्षिणाङ्गुष्ठानामिकाभ्यां धृत्वा तज्जलोत्तोलनरूपमुत्पवनं कृत्वा पवित्रं तत्र स्थापयित्वा तज्जलेन सर्व्वाणि द्रव्याणि प्रोक्ष्य असम्बरे स्थाने प्रोक्षणीं तदुत्तरे प्रणीताञ्च स्थापयेत्। आज्यचरुस्थाल्यौ प्रोक्ष्य आज्यस्थाल्यामाज्यं निक्षिप्याग्नावधिश्रयेत्।

वरुणाय त्वा जुष्टं गृह्णामि वरुणाय त्वा जुष्टं निर्वपामि वरुणाय त्वा जुष्टं प्रोक्षामि इति. पश्चात् यवतण्डुलमुष्टीनां ग्रहणनिर्वपणप्रोक्षणानि कृत्वा ॐ अग्नये. स्विष्टिकृते त्वा जुष्टं गृह्णामीत्यादिना स्विष्टिकृतस्य ग्रहणादीनि कृत्वा।

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनीमासीद।

इति मन्त्रेणाभिमन्त्र्य वारद्वयं प्रक्षाल्य चरुस्थाल्यां दुग्धे निक्षिप्याधिश्रयेत्।

ततो दर्भयुगलं सन्दीप्य आज्यस्य चरोश्च दक्षिणावर्त्तेन त्रिः परिभ्राम्य दर्भञ्च तत्रैवाग्नौ क्षिपेत्। स्रुक्स्रुवावधोमुखौ कृत्वा वारद्वयं प्रताप्य कुशैरग्रान्मूलपर्य्यन्तं सम्मृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य सम्मार्ज्जनकुशानग्नौ प्रक्षिप्य कुशोपरि स्रुक्स्रुवौ स्थापयेत्।

सुस्निग्धं चरुं ज्ञात्वा चरौ घृतस्रुवं दत्त्वा आज्यं चरुञ्चोद्वासयेत्। प्रोक्षणीपात्रस्थपवित्रं वामहस्ताङ्गुष्ठानामिकाभ्यां मूले गृहीत्वा तदुपरिस्थित दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां पवित्राग्रं गृहीत्वा,—

ॐ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण।

पवित्रेण सूर्य्यस्य रश्मिभिः।

इति घृतोत्तोलनरूपमुत्पवनं कृत्वा आज्यमवेक्षेत। प्रोक्षणी-पात्रजलञ्च—

ॐ सवितुर्वः प्रसव उत्पुणाम्यच्छिद्रेण।

पवित्रेण सूर्य्यस्य रश्मिभिः। इति।

तथैवोत्पूय तत्रैव तत् पवित्रं स्थापयेत्।

उपयमनकुशान् वामहस्ते कृत्वा उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तुष्णीं पञ्च समिधो हुत्वा उपविश्य दक्षिणजानु भूमौ पातयित्वा प्रोक्षण्याः सपवित्रेण जलेन दक्षिणादितः पर्य्युक्षेत्।

अदिते अनुमन्यस्वेति प्रागग्रां जलधारां दक्षिणस्यां दद्यात्।

अनुमते अनुमन्यस्वेति पश्चिमे उत्तराग्राम्।

सरस्वत्यनुमन्यस्वेति उत्तरे प्रागग्रां दद्यात्।

ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्व्वः।

केतपूः केतन्नः पुनातु वाचस्पतिर्वाचं नः स्वदतु।

इति मन्त्रेण ईशानादितदन्तं दक्षिणावर्त्तेन पर्य्युक्षेत्। तत् पवित्रं प्रणीतायां निधाय प्रोक्षणीपात्रं संस्रवार्थमग्नेरुत्तरे स्थापयेत्।

तत एकस्मिन् घटे नवग्रहान् अपरघटे इन्द्रादिलोकपालान् अभ्यर्च्य सर्व्वतोभद्रमण्डले कुम्भे वा वरुणं सपरिवारमर्च्चयेत्॥

तत्र भूतशुद्धिं प्राणायामं मातृकान्यासञ्च कृत्वा वाँ वीँ वूँ वैँ वौँ वः इति कराङ्गन्यासौ कृत्वा आधारशक्त्यादिवह्निमण्डलान्तं पीठन्यासं कुर्य्यात्।

ततो विचिन्तयेद्देवं वरुणं परमेश्वरम्।
प्रशान्तवदनं सौम्यं हिमकुन्देन्दुसन्निभम्॥
लावण्यामृतधाराभिस्तर्पयन्तमिव प्रजाः।
राजहंससमारूढ़ं पाशव्यग्रकरं शुभम्॥
पुष्कराद्यैः सुतैः सर्व्वैः समन्तात् परिवारितम्॥
गौर्य्या कान्त्या चानुगतं नदीभिः परिवारितम्।
नागैर्यादोगणैर्युक्तं ब्रह्माण्डमिव चापरम्॥

एवं ध्यात्वा अर्घ्यस्थापनं कुर्य्यात्। पाद्यमाचमनीयपात्रञ्च स्थापयेत्।

ततो मण्डले,—

आधारशक्तये नमः कूर्म्माय अनन्ताय पृथिव्यै सुमेरवे रत्नमण्डपाय कल्पवृक्षाय रत्नवेदिकायै।

अग्न्यादिकोणेषु,—

धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय।

पूर्व्वादिदिक्षु,—

अधर्म्माय अज्ञानाय अवैराग्याय अनैश्वर्य्याय।

मध्ये-शेषाय पद्माय मं वह्निमण्डलाय अं सूर्य्यमण्डलाय उं सोममण्डलाय नमः।

इति सम्पूज्य पूर्व्वोक्तरूपं वरुणं चिन्तयित्वा तेजोरूपं वरुणमावा-

पुटेन पुष्पाञ्जलिना मण्डले स्थापयेत्। ॐ वरुणस्येति मन्त्रेण सान्निध्यं कल्पयित्वा षडङ्गन्यासं विधाय भगवन् श्रीवरुण इहागच्छागच्छ तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भवेत्यावाह्य मूलमन्त्रेण पुष्पाञ्जलिं दत्वा भगवन् स्वागतं ते इति पृच्छेत्।

ॐ वौमिति मन्त्रेण श्रीवरुणाय नम इत्यन्तेन आसनं दत्वा पद्मश्यामाकदूर्व्वापराजिताकुशाग्रसहितं पाद्यं यवसिद्धार्थगन्धाक्षततिलपुष्पकुशाग्रदूर्व्वासहितमष्टाङ्गार्घ्यं जातीलवङ्गकक्कोलमिश्रमाचमनीयं दधिमधुघृतैर्मधुपर्कं तथैव पुनराचमनीयं स्नानजलं वस्त्रमाभरणं यज्ञोपवीतं चन्दनकर्पूरकालागुरुभिर्गन्धं पुष्पं माल्यञ्च धूपदीपनैवेद्याचमनीयताम्बूलानि च दद्यात् ततः पुष्पाञ्जलिं दत्वा मूलमन्त्रेण चन्द्रातपं दद्यात् ।

ॐ गौर्य्यै नमः ॐ काम्यै नम इति पत्नीद्वयं पञ्चोपचारैः पूजयित्वा अष्टौ नागान् पूजयेत्।

अनन्ताय वासुकये पद्माय महापद्माय तक्षकाय कुलिकाय कर्कटाय शङ्खाय नमः ।

ततो नदीभ्यः कूर्म्माय मकराय मत्स्याय शुण्डुभाय कुलीराय मण्डूकाय शिशुमाराय समुद्रेभ्यो नम इति परिवारान् पूजयेत्।

ततो यूपे वरुणमावाह्य ॐ वरुणस्येति मन्त्रेणाभिमन्त्र्य पञ्चोपचारैरभ्यर्च्य यूपमाच्छादयेत् ।

तत आघाराज्यभागौ च जुहुयात् ।

ॐ प्रजापतये स्वाहा ॐ इन्द्राय स्वाहा इत्याघारौ ।

तथाज्यभागौ ॐ अग्नये स्वाहा ॐ सोमाय स्वाहा ।

इति कृत्वा महाव्याहृतिहोमञ्च कृत्वा दशाज्याहुतीर्जुहोति ।

ॐ त्वन्नोऽग्ने वरुणस्य विद्वान्

देवस्य हेलो अवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो

विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा ॥

इदं वरुणाय एवमुत्तरत्रापि सर्व्वत्र ।

ॐ सत्वन्नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ अवयक्ष्वनो

वरुणं रराणो श्रीहिम्टड़ीकं सुहवो न एधि स्वाहा ।

ॐ- इमं मे वरुणश्रुधी हवमद्याच मृड़य ।

त्वामव स्युराचके स्वाहा ॥.

ॐ- तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।

अहेड़मानो वरुणेहवोध्युरुशं समान आयुः प्रमोषीः स्वाहा ॥

ॐ- ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ।

तेभिर्नोऽद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ॥

ॐ- अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यमित्वमया असि ।

अयानो यज्ञं वहास्ययानो धेहि भेषजं स्वाहा ॥

ॐ- उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमं श्रथाय ।

अथावयमादित्यव्रते तवानागसोऽदितये स्याम: स्वाहा ॥

ॐ- उरुं हि राजा वरुणश्चकार सूर्य्याय पन्थामन्वेतरा।

अपदे पादाः प्रतिधातवेह कुरुतापवक्ता हृदया विधश्चित् ॥

नमो वरुणाधिष्ठितो वरुणस्य पाशः स्वाहा ।

ॐ- वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्ज्जनीस्थः ।

वरुणस्य स्कम्भसर्जन्यसि वरुणस्य ऋतसदनमसि
वरुणस्य ऋतसदनीमासीद स्वाहा ।
ॐ अग्नेरनीकमप आविवेशापां नपात् प्रतिरक्षन्नसुर्य्यम् ।
दमे दमे समिधं यक्ष्यग्ने प्रतिते जिह्वा घृतमुच्चरण्यत् स्वाहा ॥

एवं वरुणोद्देशेन दशाज्याहुतीर्हुत्वा चरुहोमं कुर्य्यात् । अत्र वारुणं स्थालीपाकमित्यभिधानात् वरुणोद्देशेन हुत्वा षडाहुतीर्जुहुयात् ।

ॐ नमो वरुणाय स्वाहा इदं वरुणाय । एवमुत्तरत्रापि सर्व्वत्र। ॐ यज्ञाय स्वाहा ॐ उग्राय स्वाहा ॐ भीमाय स्वाहा ॐ शतक्रतवे स्वाहा ॐ भर्गाय स्वाहा ।

तत आज्यचरुभ्यां- ॐ अग्नये स्विष्टिकृते स्वाहा। इदमग्नये स्विष्टिकृते । ततः पुनर्महाव्याहृतिहोमं कृत्वा ॐ प्रजापतये स्वाहा इदं प्रजापतये इति हुत्वा ब्रह्मणे काञ्चनदक्षिणां दद्यात् । ततो यूपमारोपयेत् ।

यथा हयशीर्षे,—

ततो निवेशयेद्यूपं खदिरादिसमुद्भवम् ।
जलमध्येऽथवा यागमण्डपस्याजिरे गुरुः ॥
यूपव्रस्केति मन्त्रेण स्नाप्य वस्त्रेण वेष्टयेत् ।
वैजयन्तीं सितां रम्यां यूपोपरि निवेशयेत् ।
गन्धादिभिः पूजयित्वा चक्रं मूर्द्धनि विन्यसेत् ॥

मन्त्रो यथा,—

ॐ यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।

ये चार्व्वते पचनं सम्भरन्त्युतो तेषामभिपूर्त्तिर्न्न इन्वतु ॥

ततश्चूतपत्राष्टके अनन्ताद्यष्टनागनामानि लिखित्वा घटाभ्यन्तरे निक्षिप्य अनन्ताद्यष्टनागेभ्यो नम इति सम्पूज्य तस्मादेकं चूतपत्रमाकृष्य यस्य नामपत्रमुत्तिष्ठति तं नागयष्ट्या[१]वावाह्य गन्धादिभिः पूजयित्वा अमुकनागराज त्वमिमं जलाशयं रक्ष इति वदेत्।

ततो गुरुः सोदकबिन्दुभिर्यजमानं मार्ज्जयेत्।

शन्न आपो धन्वन्याः शमनः सन्तु नूप्याः।

शन्नः समुद्रिया आप शमनः सन्तु कूप्याः ॥

ॐ- द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।

पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥

तत आपोहिष्ठादि ऋक्त्रयेण। तत ऋतञ्च सत्यञ्चेत्यनेन अघमर्षणेन मार्ज्जयित्वा धेनुं नैर्ऋतकोणे अवतारयेत्।

अवतीर्य्यमाणाञ्च तां,—

इदं सलिलं पवित्रं कुरुष्व शुद्धाः पूतो मृतः सन्तु नित्यम्।

तारयन्ती सर्व्वतीर्थाभिषिक्तं लोकालोकं तरते तीर्य्यते च ॥

इति मन्त्रेणानुमन्त्रयेत्।

यजमानोऽपि तत्पुच्छाग्रलग्नो गुरुणा अन्वारब्धः।

ॐ आपोऽस्मान्मातरः शुन्धयन्तु घृतेन नो घृतपुः पुनन्तु।

विश्वं हि रिप्रं प्रवहन्ति देवी रुदिदाभ्यः शुचिरापूत एमि ॥

इति मन्त्रं पठन् ऐशान्यां दिशि उत्तीर्य्य तज्जलं शुद्धं विभाव्य स्नात्वा कृतापसव्यो धेनुपुच्छोदकेन षट् पितॄन् सन्तर्प्य,—

---

[१] ख नागं यष्ट्यावावाह्य।

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः॥
ॐ नरकेषु समस्तेषु यातनासु च संस्थिताः।
तेषामाप्यायनायैतद्दीयते सलिलं मया॥

इति पठन् जलाञ्जलिद्वयं दद्यात्। कूपे तु गोरुत्तारणं नास्ति अयोग्यत्वात् किन्तु समीपे गोर्भ्रामणं कार्य्यम्। स्नानं तर्पणञ्च तत्र नास्ति।

यथा हयशीर्षे,—

ततो निमज्जयेत्तत्र तड़ागे कारकः शुचिः।
कूपोदके तु न स्नायात् पुष्करिण्यां निमज्जयेत्॥

ततः,—

ॐ- सूयवसात् भगवती हि भूया अथो वयं भगवन्तः स्याम।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती।

इति मन्त्रेण ऐशान्यां दिशि गामुत्थापयेत्।

उत्थाप्यमाना सा यदि हिङ्करोति तदा तद्दोषप्रशमनाय

ॐ- हिङ्कृण्वती वसुमती वसूनां वत्समिच्छन्ती मनसाभ्यागात्।
दुहामश्विभ्यां पयोऽघ्न्येः सा वर्द्धतां महते सौभगाय॥

इति मन्त्रं पठेत्।

ततो वस्त्रान्तरं परिधायाचम्य सचेलकण्ठां काञ्चनशृङ्गीं वृषभजां रौप्यखुरां ताम्रपृष्ठां कांस्योपदोहां धेनुमथवा केवलां वा सामगब्राह्मणाय दद्यात्।

ॐ धेनवे नमः ॐ रुद्राय नमः ॐ एतत्सम्प्रदानब्राह्मणाय

नम इति गन्धपुष्पादिभिरभ्यर्च्य इमां धेनुं ते ददानीति ब्राह्मणहस्ते जलं दद्यात् ददस्वेति तेनोक्ते धेनुमभ्युक्ष्य कुशतिलजलान्यादाय ॐ अद्येत्यादि एतज्जलाशयोत्सर्गकर्म्मणि इमां धेनुं सचेलकण्ठां काञ्चनशृङ्गीं रौप्यखुरां तृषप्रजां ताम्रपृष्ठां कांस्योपदोहामर्च्चितां रुद्रदैवतां अमुकगोत्रायामुकशर्म्मणे सामगब्राह्मणाय तुभ्यमहं सम्प्रददे। इत्युत्सृज्य ब्राह्मणहस्ते सपुच्छं कुशत्रयजलं दद्यात्। काञ्चनशृङ्गाद्यसम्पत्तौ सचेलकण्ठामिमां धेनुमिति प्रयोगः। ततः सामगो गृहीता गायत्रीं ॐ क इदं कस्मा इदं इति कामस्तुतिं पठेत्।

ततो जलाशयस्याग्नेयादिकोणेषु जले यथाक्रमं पूर्व्वादिसमुद्रचतुष्टयमावाह्य गन्धादिभिः सम्पूज्य भोज्यत्रयमुत्सृज्य ब्राह्मणेभ्यो दत्वा जलाशयपश्चिमदिशि जलसमीपे उपविश्य ॐ जलाशयाय नमः, वरुणाय देवाय नमः, एतत्सम्प्रदानसर्व्वभूतेभ्यो नमः। इति गन्धादिभिरभ्यर्च्य जलाशयं सवस्त्रं कृत्वा वामहस्तेन धृत्वा कुशत्रयतिलजलान्यादाय,—

ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्माऽहं चतुरर्णवास्नमहीदानफलसमफलदिव्यकामसमन्वितवरुणलोकप्राप्तिकामश्चतुःसेतुवच्छिन्नं वरुणादिदैवत[१]मिमं जलाशयमर्च्चितं सर्व्वभूतेभ्य उत्सृज्ये। कुशत्रयजलं भूमौ क्षिपेत्।

यथा हयशीर्षे—

भोजयित्वा द्विजान् सम्यक् तोयमुत्सर्जयेत्ततः।
सर्व्वभूतान् समुद्दिश्य इति वाचं समुच्चरेत्॥

---

१। ख पुस्तके, वरुणदैवतम्।

आब्रह्मस्तम्बपर्य्यन्तं ये केचित् सलिलार्थिनः।
ते तृप्तिमुपगच्छन्तु तड़ागस्थेन वारिणा॥

इत्युच्चार्य्य देवा मनुष्याश्च प्रीयन्तां यथोत्सृजेत् सोऽपि वदेत्। अत्र वाप्यादिषु तड़ागस्थेनेत्यत्र मोहः कार्य्यः प्रकृतौ मोह इति गोतमवचनात् किन्तु तड़ागपदमजहत्स्वार्थलक्षणया जलाशयपरम्।

तत ॐ अद्येत्यादि अमुकगोत्रोऽमुकशर्म्माहं कृतैतज्जलाशयोत्सर्गकर्म्मणः प्रतिष्ठार्थं सवासोयुगधेनुं काञ्चनं वा दक्षिणाममुकगोत्रायामुकशर्म्मणे गुरवे तुभ्यं ब्राह्मणाय सम्प्रददे इति दक्षिणां दद्यात्। ततो मूर्त्तिधराय काञ्चनदक्षिणा देया।

हयशीर्षे,—आपोहिष्ठेति तिसृभिः पञ्चगव्यं विनिक्षिपेत्।
तीर्थतोयं तथा पुण्यं शान्तितोयं द्विजैः क्रमम्॥
गोकुलं पाययेत् पश्चाद्विजान् वेदविदस्ततः।

ततः पूर्व्ववत् पर्य्युक्ष्य पूर्णां दद्यात्।

यथा कपिलपञ्चरात्रे—

कृत्वा तु मृड़नामाग्निमभ्यर्च्च्य प्रयतः पठेत्।
महातेजाः सहस्रार्च्चिर्नमस्ते बहुरूपधृक्।
सर्व्वाग्निर्मे सर्वगतपावकाय नमोऽस्तु ते॥
त्वं रौद्र घोरकर्म्मा च घोरहा त्वं नमामि ते।
विष्णुस्त्वं लोकपालोऽसि शान्तिमत्र प्रयच्छ मे॥

ततो घृतेन स्रुचमापूर्य्य तदुपरि अधोमुखं स्रुवं कृत्वा सम्पुटाकारकराभ्यां धृत्वा उत्थाय—

ॐ पूर्णा दर्व्वि परापत सुपूर्णा पुनरापत।

वस्त्रेव विक्रीणावहा इषमूर्ज्जं शतक्रतो स्वाहा ॥

पुनस्तथैव घृतं गृहीत्वा—

सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तर्षयः सप्तधामप्रियाणि।

सप्तहोत्राः सप्तधा त्वायजन्ति सप्तयोनीरापृणस्व घृतेन स्वाहा ॥

पुनस्तथैव घृतं गृहीत्वा

पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथयज्ञैः।

घृतेन त्वं तनु' वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा।

इति पूर्णाहुतिं समाप्याग्निं विसर्ज्जयेत्।

ॐ समुद्रं गच्छ स्वाहा ॐ देवं सवितारं गच्छ स्वाहा अन्तरीक्षं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा। अहोरात्रे गच्छ स्वाहा छन्दांसि गच्छ स्वाहा. द्यावापृथिवी गच्छ स्वाहा। सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहा अग्निं वैश्वानरं गच्छ स्वाहा। मनो मे हार्द्दिं यच्छ। इत्यग्निं विसृज्य

दिवन्ते धूमो गच्छत्वन्तरीक्षं ज्योतिः।

पृथिवीं भस्मना पृण स्वाहा ॥

इति पृथिवीं शीतलयेत्।

ततो भोज्यानि यथाशक्ति ब्राह्मणेभ्यो दत्वा स्वस्त्यस्तु पुण्याहमस्तु ऋद्धिरस्तु इति ब्राह्मणान् वाचयेत्।

ॐ यज्ञेन यज्ञमिति पूजितदेवान् विसृज्य ब्राह्मणाशीर्व्वादौ कुर्य्यात्।

इति कात्यायनपरिशिष्टोक्तवारुणविधिः समाप्तः ॥

---

## अथ सेत्वारामादीनां प्रतिष्ठा विविच्यते।

हयग्रीर्षे,—

गोपथारामसेतूनां मठसंक्रमवेश्मनाम्।
नियमव्रतकृच्छ्राणां प्रतिष्ठां शृणु सत्तम॥

आराम उपवनं। मठश्छात्रादिनिलयः। वेश्म ब्राह्मणसम्प्रदानकं विष्णुसम्प्रदानकञ्च। नियम एतावन्तं कालमेतन्न भोक्तव्यमित्यादिनियमः। व्रतं लक्ष्मीव्रत-विष्णुव्रतादि। कृच्छ्रं चान्द्रायणादि। एषां फलमाह तत्रैव।

आरामं कारयेद्यस्तु नन्दने सुचिरं वसेत्।
मठप्रदानात् स्वर्लोकमाप्नोति पुरुषः सदा॥
सेतुप्रदानादिन्द्रस्य लोकं प्राप्नोति मानवः।
गोमार्गस्य तथा कर्त्ता गोलोके क्रीड़ते चिरम्॥
प्रपाप्रदानाद्वरुणलोकमाप्नोत्यसंशयम्।
संक्रमाणान्तु यः कर्त्ता स दुर्गं तरते नरः॥
स्वर्गलोके च निवसेदिष्टकासेतुकृत्तथा।
कृच्छ्रकृत् स्वर्गमाप्नोति सर्व्वपापविवर्ज्जितः॥
नियमव्रतकृद्याति विष्णुलोकं नरोत्तमः।
लक्ष्मीव्रतादीनान्तु तत्र तत्रोक्तं फलमन्वेष्यम्॥

विष्णुसम्प्रदानकगृहदानफलमुक्तं हयग्रीर्षे,—

यथा,— प्रासादारब्धद्रव्याणां यावन्तः परमाणवः।
तावद्वर्षसहस्राणि तत्कर्त्ता विष्णुलोकभाक्॥

तथा तत्रैव,—

गृहं सुशोभनं कृत्वा गृहोपकरणान्वितम्।
अन्नपानसुसम्पूर्णं सर्व्वकामगुणान्वितम्।
संस्कुर्य्याद्विधिनानेन प्रदद्यात् ब्राह्मणाय च॥
एवं भूतं गृहं यस्तु ब्राह्मणाय प्रयच्छति।
स स्वर्गलोकमाप्नोति यावदाहूतसंप्लवम्॥
विष्णवे च गृहं दत्वा विष्णुलोकमवाप्नुयात्॥
इयं प्रतिष्ठा ते प्रोक्ता सर्व्वसाधारणाऽनघ।
कर्त्तव्या देशिकेन्द्रैश्च प्रतिष्ठा यत्र विद्यते॥
सर्व्वेष्वेतेषु कर्त्तव्या प्रतिष्ठाविधिना बुधैः।
फलार्थिभिस्त्वप्रतिष्ठं यस्मान्निष्फलमुच्यते॥

तथा मत्स्यपुराणे,—

अप्येकमपि राजेन्द्र वृक्षं संस्थापयेत्तु यः।
सोऽपि स्वर्गे वसेद् ब्रह्मन् यावन्मन्वन्तरं नरः॥

अथ कृतनित्यक्रियो यजमानो मातृपूजां विधाय[1] वृद्धिश्राद्धञ्च निर्वर्त्त्य संकल्पं कुर्य्यात्।

ॐ अद्येत्यादि गोलोके चिरक्रीड़नकामो गोपथप्रतिष्ठामहं करिष्ये। एवं नन्दनवनाधिकरणकसुचिरवासकाम आरामप्रतिष्ठामहं करिष्ये। तथा,—

इन्द्रलोकप्राप्तिकामः सेतुप्रतिष्ठामहं करिष्ये।
स्वर्लोकप्राप्तिकामो मठप्रतिष्ठामहं करिष्ये।

---

१ ख पुस्तके, विधाय पदं नास्ति।

दुर्गतरण-स्वर्गलोकनिवास-कामः संक्रमणप्रतिष्ठामहं करिष्ये । तथा,—

वरुणलोकप्राप्तिकामः प्रपाप्रतिष्ठामहं करिष्ये । सर्व्वपापविवर्जितत्व-स्वर्गप्राप्तिकामश्चान्द्रायणादिकृच्छ्रप्रतिष्ठामहं करिष्ये ।

व्रतानान्तु तत्तद्विहितफलकामनया संकल्पः । वेश्मप्रदानफलं विपुलगृहदानप्रकरणे लिखितम् ॥

विष्णुसम्प्रदानकगृहदाने तु एतत् प्रासादारम्भकद्रव्यपरमाणुसमसंख्यवर्षसहस्रावच्छिन्नविष्णुलोकावस्थितिकामो विष्णुसम्प्रदानकगृहदानकर्म्माहं करिष्ये ।

तथा,— मन्वन्तरावच्छिन्नस्वर्गवासकामो वृषप्रतिष्ठामहं करिष्ये । इति सङ्कल्प्य आचार्य्यमन्वाख्यानञ्च वृणुयात् । ततो यजमान आचार्य्यपादौ स्पृष्ट्वा वदेत् ।

ॐ नारायणस्वरूपेण संसारात्त्राहि मां प्रभो ।
त्वत्प्रसादाद्गुरो साङ्गं प्राप्नोमि यज्ञयोगतम् ॥
त्वं हि नाथ प्रसन्नो मां त्राहि संसारसागरात् ।
?हरिस्थापरमुद्धृत्य मम शान्तिं कुरु प्रभो ॥

ततो गुरुर्यजमानमुत्तोल्य वदेत् ।

ॐ उत्तिष्ठ वत्स भद्रन्ते मत्प्रसादात्त्वयाऽनघ ।
प्राप्तुर्या धर्म्मसर्व्वस्वं दुष्प्राप्यं यत्सुरासुरैः ॥

ततो गुरुः,— पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद्यागमण्डपम् ।

तत एकस्मिन् घटे गणेशं सम्पूज्यापरघटे द्वादशादित्याष्टवस्वेकादशरुद्र-साध्यगण-विश्वेदेवाश्विनीकुमारमरुद्गणान् पूजयेत् ।

यथा हयशीर्षे,—

[१]आदित्या वसवो रुद्रा साध्या विश्वेऽश्विनौ ग्रहाः।
ऋषयश्च तथा सर्व्वे मानमर्हन्ति चोत्तमम्॥

ततः सर्व्वतोभद्रमण्डले घटान्तरे वा विष्णुं पूजयेत्।

यथा,—

गणेशं विघ्ननाशाय सम्पूज्य पूजयेद्धरिम्।
विष्णुं यो नार्च्चयेदादौ तत्कर्म्म विफलं भवेत्।

प्रथमं भूतशुद्धिं मातृकान्यासञ्च कलाङ्गन्यासं कुर्य्यात्।

प्रजापतिर्ऋषिर्मस्तके गायत्रीछन्दो मुखे श्रीवासुदेवो देवता हृदि श्रीवासुदेवपूजने विनियोगः।

ॐ अङ्गुष्ठाभ्यां नमः, नमस्तर्ज्जनीभ्यां स्वाहा, भगवते मध्यमाभ्यां वषट्, वासुदेवाय अनामिकाभ्यां हुं, ॐ नमो भगवते वासुदेवाय कनिष्ठाभ्यां वौषट्।

ॐ हृदयाय नमः, नमः शिरसे स्वाहा, भगवते शिखायै वषट्, वासुदेवाय कवचाय हुं, समस्तेनास्त्राय फट्, तालत्रयं दिग्बन्धनञ्च कुर्य्यात्।

मन्त्रवर्णान्न्यसेन्मूर्द्ध्नि भाले नेत्रे मुखे गले।
हस्ते हृदुदरे नाभौ लिङ्गे जानौ पदे क्रमात्॥

ततः प्राणायामं कृत्वा पीठन्यासं विधाय देवं चिन्तयेत्।

विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा-
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम्।

१ ख पुस्तके आदित्येत्यादि पूजयेदित्यन्तं पङ्क्तिचयं नास्ति।

आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥

इति ध्यात्वा मानसैर्गन्धादिभिः सम्पूज्य अर्घं पाद्यमाचमनीयञ्च स्थापयेत् । ततो मण्डले पीठपूजां कुर्य्यात् ।

ॐ आधारशक्तये नमः, प्रकृत्यै कूर्म्माय अनन्ताय पृथिव्यै क्षीर-सागराय श्वेतद्वीपाय रत्नमण्डपाय कल्पवृक्षाय ।

आसनस्याग्नेयादिकोणेषु,—

धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय ।

दिक्षु,—

अधर्म्माय अज्ञानाय अवैराग्याय अनैश्वर्य्याय ।

मध्ये,—

शेषाय पद्माय अं सूर्य्यमण्डलाय उं सोममण्डलाय मं वह्नि-मण्डलाय सं सत्त्वाय रं रजसे तं तमसे आं आत्मने अं अन्तरात्मने पं परमात्मने ह्रीं ज्ञानात्मने ।

अष्टदिक्षु,—

विमलायै उत्कर्षिण्यै ज्ञानायै क्रियायै योगायै प्रह्व्यै सत्यायै ईशानायै । मध्ये,—अनुग्रहायै ।

ॐ नमो भगवते विष्णवे सर्व्वभूतात्मने वासुदेवाय सर्व्वात्म-संयोगयोगपद्मपीठात्मने नमः । इति पुष्पाञ्जलिं दत्वा पूर्व्ववद्भगवन्तं ध्यात्वा पुष्पाञ्जलिना आवाह्य भगवन् श्रीवासुदेव इहागच्छागच्छ इह तिष्ठ तिष्ठ सन्निहितो भव सन्निरुद्धो भव इत्यावाहन-स्थापन-

सन्निधापन-सन्निरोधन-परमीकरणामृतीकरणमुद्राः प्रदर्श्य द्वादशाक्षरमन्त्रेण षोड़शोपचारैः पूजयेत्।

उपचारा यथा,—

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
मधुपर्काचमस्नान वसनाभरणानि च॥
[1]गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनन्तथा।
पूजायां श्रीहरेः प्रोक्ता उपचारास्तु षोड़श॥

## अथावरणपूजा।

अग्न्यादिकोणकेशरेषु,—

ॐ हृदयाय नमः, नमः शिरसे स्वाहा, भगवते शिखायै वषट् वासुदेवाय कवचाय हुं। चतुर्द्दिक्षु समस्तेनास्त्राय फट्।

पूर्व्वादिदिक्‌पत्रेषु,—

वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय।

अग्न्यादिकोणपत्रेषु,—

शान्त्यै श्रियै सरस्वत्यै रत्यै।

चतुर्दिक्‌पत्राग्रेषु—वारत्रयभ्रमणेन द्वादशमूर्त्तीः पूजयेत्। केशवाय नारायणाय माधवाय गोविन्दाय विष्णवे मधुसूदनाय त्रिविक्रमाय वामनाय श्रीधराय हृषीकेशाय पद्मनाभाय दामोदराय।

---

१ क पुस्तके, अधिकः पाठः
गन्धः पुष्पं तथा धूपो दीपो नैवेद्यमेव च।
पुनराचमनं माल्यं चन्दनञ्च नमस्कृतिः॥

[1]दिक्षु—इन्द्राय अग्नये यमाय नैर्ऋताय वरुणाय वायवे कुवेराय ईशानाय ।

निर्ऋतिवरुणयोर्मध्ये—अनन्ताय ।

इन्द्रेशानयोर्मध्ये—ब्रह्मणे ।

तद्बाह्ये—

वज्राय शक्तये दण्डाय खड्गाय पाशाय अङ्कुशाय गदायै शूलाय चक्राय पद्माय नमः ।

ततो यथाशक्ति द्वादशाक्षरमन्त्रं जपित्वा प्रदक्षिणीकृत्य नमस्कुर्य्यात् । एवं व्रतविशेषे तु व्रतदेवतां विशिष्य पूजयेत् ।

ततः कुण्डे वा स्थण्डिले वाग्नि यथाविध्यग्निसंस्कारं कुर्य्यात् । तन्मध्ये यवचरुं श्रपयेत् ।

यथा हयशीर्षे,—

ततो वह्निं समाधाय श्रपेद्यवमयं चरुम् ।
क्षीरेण कपिलायास्तु तद्विष्णोरिति देशिकः ॥
प्रणवेनाभिघार्य्यैव दर्व्या संघट्टयेत्ततः ।
साधयित्वावतार्य्याथ तद्विष्णोरिति होमयेत् ॥
व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत् ।
विश्वतश्चक्षुरित्युक्त्वा वेदाद्यैर्होमयेत्ततः ॥

वेदादिमन्त्रचतुष्टयं यथा,—

ॐ अग्निमीळे, ॐ इषेत्वा, ॐ अग्न आयाहि, ॐ शन्नो देवी ।

---

१ ख पुस्तके, दिक्ष्वित्यारभ्य पद्माय नम इत्यन्तसन्दर्भे तद्बाह्ये इन्द्रादिलोकेशान् सम्पूज्य तद्बाह्ये वज्रादीन् पूजयेत् ।

तथा तत्रैव,—

ॐ अग्नये स्वाहा ॐ सूर्य्याय स्वाहा ॐ प्रजापतये स्वाहा ॐ अन्तरीक्षाय स्वाहा ॐ द्यौः स्वाहा ॐ ब्रह्मणे स्वाहा ॐ पृथिव्यै स्वाहा ॐ महाराजाय स्वाहा ॐ सोमं राजानमिति जुहुयात्। लोकपालेभ्यो ग्रहेभ्यश्च स्वस्वमन्त्रैर्जुहुयात्।

एवं कृत्वा चरोर्भागान् दद्यात् दशदिशां बलिम्।

तेनैव चरुशेषेनैवेत्यर्थः।

तथा,—

यथा,—ततः पुरुषसूक्तस्य मन्त्रैराज्यन्तु होमयेत्।

ॐ सहस्रशीर्षा ॐ पुरुष एवेदम्।

ॐ एतावानस्य ॐ त्रिपादूर्द्धम्।

ॐ ततो विराड़िति ॐ तस्माद्यज्ञादिति।

ॐ तस्माद् यज्ञादिति ॐ तस्मादश्वा इति।

ॐ तं यज्ञमिति ॐ यत्पुरुषमिति।

ॐ ब्राह्मणोऽस्येति ॐ चन्द्रमा मनस इति।

ॐ नाभ्या आसीदिति ॐ यत्पुरुषेणेति।

ॐ सप्तास्यासन्निति ॐ यज्ञेन यज्ञमिति।

इति पुरुषसूक्तस्य षोड़शर्च्चग्भिर्जुहुयात्।

अथ तिलहोमः।

ॐ इरावतीति विष्णवे आब्रह्मन्निति ब्रह्मणे।

ॐ विष्णोरराटमिति विष्णवे, ॐ त्र्यम्बकमिति रुद्राय।

ॐ देवानुयायिभ्यः स्वाहा। ग्रहेभ्यो दिक्पालेभ्यः स्वस्वमन्त्रै

जुहुयात् । ॐ पर्व्वतेभ्यः स्वाहा ॐ नदीभ्यः स्वाहा ॐ समुद्रेभ्यः स्वाहा इति । तिलहोमं समाप्य घृतेन वौषडन्तवैष्णवमन्त्रेण पूर्णाहुतित्रयं दद्यात् ।

यथा हयशीर्षे,—

इरावतीति जुहुयात्तिलान् घृतपरिप्लुतान् ।
हुत्वा तु ब्रह्मविष्ण्वीशदेवानामनुयायिनाम् ॥
ग्रहानामाहुतीर्दत्वा लोकेशानामथो पुनः ।
पर्व्वतानां नदीनाञ्च समुद्राणां तथैव च ॥
हुत्वा तु हविषा दद्यात् स्रुचा पूर्णाहुतित्रयम् ।
वौषडन्तेन मन्त्रेण वैष्णवेन सुरोत्तम ॥

अते तु यत्र ये ये विशेषास्ते ते तथैव कर्त्तव्याः ।

तथा तत्रैव,—

गावः प्रीतिं समायान्तु प्रचरन्त्वत्र हर्षिताः ।
इति गोपथमुत्सृज्य यूपं निवेशयेत् ॥

ॐ अद्येत्यादि गोलोके चिरक्रीड़नकामो गोपथमिमं विष्णुदेवतं गोभ्योऽहं ददे ।

गावः प्रीतिं समायान्तु प्रचरन्त्वत्र हर्षिताः ।

इति पठेत् । एवं नन्दनवनाधिकरणकसुचिरवासकामो वनस्पतिदेवतमिममारामं सर्व्वभूतेभ्योऽहं ददे ।

तथा वरुणेन्द्रलोकावाप्तिकामः पूषदेवतमिमं सेतुं सर्व्वभूतेभ्योऽहं ददे । तथा,—स्वर्लोकप्राप्तिकामो मठमिमं विष्णुदेवतं सर्व्वभूतेभ्योऽहं ददे ।

तथा,— दुर्गतरण— स्वर्लोकनिवासकामः संक्रममिमं पूषदैवतं सर्व्वभूतेभ्योऽहं ददे। तथा वरुणलोकावाप्तिकामो वरुणदैवतामिमां प्रपां सर्व्वभूतेभ्योऽहं ददे। विपुलगृहदानप्रकारस्तु पूर्व्वमेव लिखितः।

विष्णुसम्प्रदानकगृहदाने तु एतत्प्रासादारम्भकद्रव्यपरमाणुसम-संख्य वर्षसहस्रावच्छिन्न विष्णुलोकावस्थितिकामो विष्णुदैवतमिमं प्रासादं श्रीविष्णवेऽहं ददे।

व्रते तु तत्तद्विहितफलकामनया कृतमिदममुकव्रतं श्रीविष्णवे समर्पये। प्रीयतां भगवान् विष्णुः।

यथा हयग्रीर्षे,—

प्रीयतां भगवान् विष्णुरित्युत्सृज्य व्रतं बुधः।

तथा,—

सर्व्वपापविवर्ज्जितत्व-स्वर्गलोकावाप्तिकामनया कृतैतच्चान्द्राय-णादिकृच्छ्रं श्रीविष्णवे समर्पये।

प्रीयतां भगवान् विष्णुः।

हयग्रीर्षे,— पञ्चगव्यं चरुं प्राश्य दद्यादाचार्य्यदक्षिणाम्।
तिलपात्रं हेमयुक्तं सवत्सां गामलङ्कृताम्॥
द्विजेभ्यो दक्षिणा देया ब्राह्मणे चैव काञ्चनम्।
अनिवारितमन्नाद्यं सर्व्वेष्वेतेषु कारयेत्॥

ततोऽग्निं विसृज्याच्छिद्रं कुर्य्यात्।

इति हयग्रीर्षोक्तसर्व्वसाधारणी प्रतिष्ठा समाप्ता।

---

## अथ प्रसङ्गादग्निसंस्कारो लिख्यते।

कपिलकृतपञ्चरात्र-श्रीपारस्करमतानुसारेण।

अध्वर्य्यूणां तुष्ट्यै स्थापनमग्नेः प्रसङ्गतो वच्मि॥

तत्र पारस्करः,—

अथातो गृह्यस्थालीपाकानां कर्म्म।

परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्य्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत् प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्य्यग्नि कुर्य्यात्। स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादाज्यमुद्वास्य उत्पूयावेक्ष्य प्रोक्षणीश्च पूर्व्ववत् उपयमनान् कुशानादाय तिष्ठन् समिधोऽभ्यादाय पर्य्युक्ष्य जुहुयात्। एष एव विधिर्यत्र क्वचिद्धोमः।

एतदेव प्रपञ्चितं कपिलपञ्चरात्रे—

कपिल उवाच।

वक्ष्येऽथ स्थालीपाकानां कर्म्म। प्रजापते इत्युपविशति देवस्य त्वेति दर्भानासादयति। एष वः कुरवो दर्भं गृह्णाति। यद्देवा देवहेलनमिति परिसमूहनम्। मानस्तोकेनोपलिप्य त्वां वृत्रेत्युल्लिख्य सदसस्पतिमित्युद्धृत्य अयोऽस्य कीलालमित्यभ्युक्ष्य देवस्यत्वेति कुण्डे कुशास्तरणं क्रव्यादमित्यग्निं गृह्णाति।

कामोन्मत्तं ततः कृष्णं लक्ष्मीमृतुमतीं स्मरेत्।

तयोः सङ्गमयोगेन वह्निः संजातसंस्थितः।

वैश्वानरो न ऊतय इत्यग्निं स्थापयति दक्षिणतो ब्रह्मासनं

आत्रह्मन् ब्राह्मण इति ब्राह्मणं स्थापयति। आपोहिष्ठेत्युत्तरे प्रणीतां स्थापयति। देवस्य त्वेति परिस्तरणं कृत्वा पात्रासादनं पवित्रच्छेदनानि पवित्रे प्रोक्षणीपात्रं आज्यस्थाली चरुस्थाली सम्मार्जनकुशा उपयमनकुशाः समिधः आज्यं तण्डुलाः पूर्णपात्रं दक्षिणा।

अन्येषामप्यर्थवतामुपकल्पनं पवित्रकरणं पात्रेऽपः कृत्वा उत्पवनं सव्यहस्तकरणं दक्षिणेनोद्गमनं तासामेव ताभिः प्रोक्षणं यान्यासादितानि पात्राणि तानि प्रोक्ष्य वामस्वरे देशे प्रोक्षणीनिधानं। आज्यस्थाल्यामाज्यनिर्वापः सोदके चरौ तण्डुलं प्रक्षिप्य आज्याधिश्रयणं चरोश्चाधिश्रयणं पर्य्यग्निकरणमुभयोः। स्रुवप्रतपनं सम्मार्जनकुशैः सम्मार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य निधानं। शृते चरौ आज्यमुद्वास्य चरुश्चोद्वास्य आज्योत्पवनं आज्यावेक्षणं प्रोक्षण्याः प्रत्युत्पवनं हविरासादनं उपयमनकुशानादाय तिष्ठन् समिधः प्रक्षिप्य उपविश्य दक्षिणजानुनिपातनं सपवित्रप्रोक्षण्युदकेन पर्य्युक्षणं प्रणीतायां पवित्रस्थापनम्। यदि ब्रह्मा चलति यदि प्रणीता चलति यदि परिस्तरणं दहति तदा स्वेन स्वेन मन्त्रेण स्थापयेत्तत् समाहितः। तद्दोषप्रशमनार्थं घृताष्टाहुतीर्जुहुयात् विष्णोरराटमन्त्रेणेति ब्रह्मण्यन्वारब्धे होमः।

मनसा—प्रजापतये स्वाहा इति पूर्व्वाघारः।

इन्द्राय स्वाहा इत्युत्तराघारः।

अग्नये स्वाहा सोमाय स्वाहेत्याज्यभागौ।

भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहा।

त्वन्नः, सत्वन्नः, अयाश्चाग्ने:, ये ते शतं, उदुत्तमं, प्रजापतिः,

खिष्टिकृदिति । पृथक् पृथक् प्रणवेनाष्टाज्याहुतिभिर्वक्ष्यमाणगर्भाधाना-दिक्रियाकरणम् ।

अग्निमूर्त्तिं ततो ध्यात्वा होमकर्म्म समारभेत् ।
दधीचिगोत्रसम्भूतं प्रवरं घृतकौशिकम् ॥
लम्बोदरं चतुर्बाहुं पीनञ्चैव सुशोभनम् ।
स्रुवं दक्षिणके हस्ते स्रजमूर्द्ध्वं प्रकीर्त्तिताम् ॥
धारयन्तं स्रुचं वामे ऊर्द्ध्वं शक्तिसमन्वितम् ।
योगाभ्यासरतं रक्तं रक्तवस्त्रावगुण्ठितम् ॥
शिखाभिः सप्तभिर्युक्तं सप्तजिह्वासमन्वितम् ।
प्रस्फुरन्तं महादीप्तं प्रज्वलन्तं विचिन्तयेत् ॥

अथ प्रयोगलिखनेनैव सूत्रार्थो विविच्यते ।

तत्र प्रथमं स्थानशुद्धिं विधाय उभयतो हस्तप्रमाणं वालुकाभिरङ्गुलोच्छ्रायं स्थण्डिलं कृत्वा कुण्डं वा यथाविधि विधाय दर्भपाणिराचम्य कुशयुक्ते आसने—

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नोऽस्तु वयं स्याम: पतयो रयीनाम् ।
इति मन्त्रेणोपविश्य ।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
इति मन्त्रेण दर्भानानीय ।

ॐ एष वः कुरवो राजैषवः पञ्चाला राजा
सोमोऽस्माकं ब्राह्मणानां राजा ।

इति मन्त्रेण दर्भान् गृहीत्वा ।

ॐ यद्देवा देवहेलनं देवासश्चकृमा वयम् ।

अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ।

इति मन्त्रेण मार्जनरूपं परिसमूहनं कृत्वा

ॐ मानस्तोके तनये मान आयुषिमानो अश्वेषुरीरीषः ।

मानोवीरा रुद्रभामिनोऽवधीर्हविष्मन्तः सदमि त्वा हवामहे ॥

इति मन्त्रेण गोमयेनोपलिप्य ।

ॐ त्वां वृचेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्व्वतः ।

इति मन्त्रेण स्फ्येन कुशमूलेन वा उत्तराग्रामेकविंशत्यङ्गुल-प्रमाणां रेखां कृत्वा तदुपरि द्वादशाङ्गुलप्रमाणं सप्ताङ्गुलान्तरितं प्रागग्रं विष्णुरुद्रेन्द्रदेवताकं रेखात्रयं कृत्वा ।

ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।

सनिं मेधामयासिषं स्वाहा ।

इति मन्त्रेण दक्षिणहस्ताङ्गुष्ठतर्ज्जनीभ्यां रेखोत्कीर्णमृत्तिका-मुद्धृत्य उत्तरस्यां दिशि प्रक्षिपेत् ।

ॐ अथो अन्नस्य कीलालमुपहूतो गृहेषु नः ।

क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयोः ॥

इति मन्त्रेण पञ्चगव्येन तीर्थोदकेन वाऽभ्युक्ष्य ।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।

इति मन्त्रेण स्थण्डिले कुण्डे वा कुशानांस्तीर्य्य तत्र च ।

वागीश्वरीमृतुस्नातां वागीश्वरेण संयुक्तां ध्यात्वा

वागीश्वर-वागीश्वरीभ्यां नम इति सम्पूजयेत् ।

विष्णुहोमे तु,—

कामोऽमन्तं ततः कृष्णं लक्ष्मीमृतुमतीं यजेत्।
तयोः सुक्रमयोगेन वह्निः संजातसंस्थितः॥
सूर्य्यकान्तादिसम्भूतं यदा श्रोत्रियगेहजम्।
आनीय वह्निं पात्रेण क्रव्यादंशं परित्यजेत्॥

ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः।
इति मन्त्रेण ज्वलदिन्धनमेकं गृहीत्वा दक्षिणस्यां दिशि त्यजेत्।

ॐ—वैश्वानरो न ऊतय आप्रयातु परावत।
अग्निनः सुष्टभीरुपः।

इति मन्त्रेणाभिमन्त्र्य धेनुमुद्रयाऽमृतीकृत्य फडिति संरक्ष्य हुमित्यवगुण्ठ्य रं अग्नये नम इति सम्पूज्य जानुद्वयं भूमौ पातयित्वा।

ॐ इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्।
इति मन्त्रेण कुण्डस्योपरि त्रिः परिभ्राम्य।

ॐ भूर्भुवः स्वरिति मन्त्रेण आत्मनोऽभिमुखं कृत्वा अग्निं स्थापयेत्।

ॐ चित् पिङ्गल हन हन पच पच दह दह सर्व्वज्ञा ज्ञापय स्वाहा इत्यग्निं प्रज्वाल्य।

ॐ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं सर्व्वतोमुखम्॥

इति मन्त्रेणाग्निमुपतिष्ठेत्।

ॐ इहैदधिसर्व्वोदततिष्ठाम्यस्य सदन आसीद योऽस्मत् पाकतरः।
इति मन्त्रेण प्रदक्षिणावर्त्तेन अनवच्छिन्नधारया गन्धा दक्षिणस्यां दिशि आसने प्रागग्रान् कुशानास्तीर्य्य—

ॐ निरस्तः पाप्मा हत तेन वयं द्विष्मः।

इति मन्त्रेण वामहस्ताङ्गुष्ठानामिकाभ्यां कुशमेकं निरस्य,—

ॐ इदमहं बृहस्पते सदसि सीदामि।

प्रसूतो देवेन सवित्रा तदग्रये प्रब्रवीमि।

तद्वायवे तत्पृथिव्यै।

इति मन्त्रेण तदुपरि ब्रह्माणमुत्तरामुखमुपवेश्य।

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे

राजन्यः शूर इषव्योतिव्याधी महारथो जायताम्।

इत्यभिमन्त्र्य सम्पूज्य च ब्राह्मणाभावे कुशमयं ब्राह्मणं छत्रमुत्तरीयं कमण्डलुं वा तत्र संस्थाप्य तेनैव पथा प्रत्यागच्छेत्।

तत उत्तरे जलपूर्णं चमसादिपात्रं प्रणीतासंज्ञकं।

ॐ आपोहिष्ठा मयोभुवस्ता न ऊर्जे दधातन।

महेरणाय चक्षुसे।

इति मन्त्रेण स्थापयित्वा,—

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।

इति मन्त्रेण षोड़शभिर्द्वादशभिर्वा दर्भैरगर्भैरीशानादितोऽग्रेण मूलमाच्छादयन् चतुर्दिक्षु परिस्तरेत्। कुण्डे तु द्वितीयमेखलोपरि परिस्तरणम्।

तत उत्तरे पश्चिमांशात् प्रागन्तं यावत् कुशोपरि होमद्रव्यासादनम्। यथा,—

पवित्रच्छेदनार्थास्त्रयो दर्भाः पवित्रे द्वे प्रोक्षणीपात्रं आज्यस्थाली यदि चरुहोमस्तदा चरुस्थाली सम्मार्ज्जनदर्भाः षट्, उपयमनकुशाः

सप्त, पञ्च समिधः स्रुव आज्यं तण्डुला ब्रह्मदक्षिणा अन्यान्यपि यागोपकरणानि द्रव्याणि स्थापयेत् ।

ॐ पवित्रे स्थो वैष्णव्यौ । इति मन्त्रेण पवित्रच्छेदनदर्भैः प्रादेशप्रमाणं पवित्रं छित्वा 'ॐ विष्णोर्मनसा पूते स्थः' इत्यभ्युक्ष्य प्रोक्षणीपात्रे पवित्रं स्थापयित्वा प्रणीताजलेन प्रोक्षणीं पूरयित्वा वामहस्ते प्रोक्षणीं स्थापयित्वा तत् पवित्रं दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां धृत्वा तज्जलेनोत्तोलनरूपमुत्पवनं कृत्वा पवित्रं तत्रैव स्थापयित्वा तेनैव जलेन तज्जलमन्यानि च पूर्व्वासादितद्रव्याणि संप्रोक्ष्य असञ्चारे स्थाने प्रोक्षणीं तदुत्तरे प्रणीताञ्च स्थापयेत् ।

ॐ फडिति मन्त्रेणाज्यस्थालीं चरुस्थालीञ्च प्रोक्षणुदकेन संप्रोक्ष्य आज्यं निक्षिप्य वायुकोणे अङ्गारानुत्तोल्य तत्रैवाज्यमधिश्रयेत् ।

यदि चरुहोमस्तदा ॐ अग्नये त्वाजुष्टं गृह्णामि इति तण्डुलमुष्टिं गृहीत्वा ॐ अग्नये त्वाजुष्टं निर्वपामीति उदूखले स्थापयित्वा ॐ ॐ अग्नये त्वाजुष्टं प्रोक्षामीति संप्रोक्ष्य एवं प्रतिदेवतानाम्ना ग्रहण-निर्वपणप्रोक्षणानि कृत्वा—

ॐ उदूखले मुसले यच्च सूर्पे आशिश्रेष दृषदि यत् कपाले ।

उत पुरुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य स्वाहा ।

इति मन्त्रेणावहत्य ।

ॐ वातोवावो मनो वा गन्धर्व्वाः सप्तविंशति ।

तेऽग्रेऽश्वमयुञ्जं स्तेऽस्मिञ्जवमादधुः ।

इति मन्त्रेण सूर्पेण प्रस्फोट्य वारत्रयं प्रक्षाल्य चरुस्थाल्यां सोदके दुग्धे निक्षिप्याधिश्रयेत् ।

ततो दर्भयुगलं सन्दीप्य आज्यस्य चरोश्च दक्षिणावर्त्तेन त्रिः परिभ्राम्य तं दर्भं तत्रैव क्षिपेत्। पाणिभ्यां स्रुक्स्रुवौ गृहीत्वा अधोमुखौ कृत्वा वारत्रयं प्रताप्य सम्मार्जनकुशैरग्रान्मूलपर्य्यन्तं संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य सम्मार्ज्जनकुशानग्नौ प्रक्षिप्य कुशोपरि स्रुक्स्रुवौ स्थापयेत्। सुखिन्नमदग्धं चरुं अपयित्वा चरौ घृतस्रुवं दत्वा आज्यं चरुञ्चोद्वास्य तमग्निं तत्रैवाग्नौ क्षिपेत्।

ततः प्रोक्षणीस्थपवित्रं वामहस्ताङ्गुष्ठानामिकाभ्यां मूले गृहीत्वा तदुपरिस्थितदक्षिणहस्ताङ्गुष्ठानामिकाभ्यां पवित्राग्रं गृहीत्वा,—

ॐ सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण।

पवित्रेण वसोः सूर्य्यस्य रश्मिभिः।

इति मन्त्रेण पवित्रमध्येन हतोत्तोलनरूपमुत्पवनं कृत्वा आज्यमवेक्षेत। तथैव प्रोक्षणीपात्रस्थं जलञ्च

ॐ सवितुर्वः प्रसव।

इति मन्त्रेणोत्पूय तत्रैव पवित्रं स्थापयेत्।

उपयमनकुशांश्च वामहस्ते गृहीत्वा चोत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तुष्णीमेव—

समिधः पञ्च जुहुयात् मूलाग्रघृतसंप्लुताः।

इति सारदातिलकवचनात्।

पञ्चैव समिधो हुत्वा उपविश्य दक्षिणं जानु भूमौ पातयित्वा प्रोक्षण्याः सपवित्रेण जलेन दक्षिणादितः पर्य्युक्षेत्।

ॐ अदितेऽनुमन्यस्व इति प्रागग्रां जलधारां दक्षिणस्यां दद्यात्। ॐ अनुमतेऽनुमन्यस्वेति पश्चिमे उत्तराग्रां। ॐ सरस्वत्यनुमन्यस्व इति उत्तरस्यां प्रागग्रां जलधारां दद्यात्।

ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिम् ।

भगाय दिव्यो गन्धर्व्वः केतपूः केतन्नः पुनातु ।

वाचस्पतिर्वाचन्नः स्वदतु ।

इति मन्त्रेण ईशानादि तदग्नं प्रदक्षिणावर्त्तेन पर्य्युक्षेत् ।

तथा चापस्तम्बः,—

अथाग्निं परिषिञ्चति अदिते अनुमन्यस्वेति दक्षिणतः प्राचीनम् ।

अनुमते अनुमन्यस्वेति पश्चादुदीचीनम् ।

सरस्वत्यनुमन्यस्वेति उत्तरतः प्राचीनम् ।

देव सवितः प्रसुवेति समस्तम् ।

ततस्तत् पवित्रं प्रणीतायां निधाय प्रोक्षणीपात्रं संस्रवार्थमग्नेरुत्तरे स्थापयेत् । ततः स्रुवं गृहीत्वा ब्रह्मणोऽन्वारब्धपूर्व्वकमाज्येनाघाराज्यभागौ च जुहुयात् ।

तत्राघारौ,—

प्रजापतिं मनसा ध्यात्वा वायुकोणादारभ्याग्निकोणपर्य्यन्तं घृतधारां दद्यात् ।

ॐ प्रजापतये स्वाहा इदं प्रजापतये ।

स्रुवलग्नं हविःशेषं सर्व्वञ्च प्रोक्षणीपात्रे स्थापयेत् ।

तत इन्द्रं ध्यात्वा निर्ऋतिकोणादारभ्य ईशानकोणपर्य्यन्तं ।

ॐ इन्द्राय स्वाहा इदमिन्द्राय ।

अथाज्यभागौ,—

अग्नेर्दक्षिणे पश्चिमान्तात् पूर्व्वान्तं यावत् ॐ अग्नये स्वाहा इदमग्नये इत्यग्नेर्दक्षिणलोचनं स्पष्टं भावयेत् ॥

अग्नेरुत्तरे पश्चिमान्तात् पूर्व्वान्तं यावत् ।

ॐ सोमाय स्वाहा इदं सोमाय। इत्यग्नेर्वामलोचनं स्पष्टं भावयेत् ।

ततो महाव्याहृतिहोमः ।

ॐ भूः स्वाहा इदमग्नये। ॐ भुवः स्वाहा इदं वायवे। ॐ स्वः स्वाहा इदं सूर्य्याय। ॐ भूर्भुवः स्वः स्वाहा इदमग्निवायुसूर्य्येभ्यः। अग्नये वा सर्वत्र ।

ब्रह्मणोऽन्वारम्भं त्यक्त्वा पञ्चवारुणहोमं कुर्य्यात् ।

ॐ त्वन्नो अग्ने वरुणस्य विद्वान्
देवस्य हेडो अवयासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो
विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा ॥

इदमग्निवरुणाभ्याम् ।

ॐ सत्वन्नो अग्ने वमो भवोती नेदिष्ठो
अस्या उषसो व्युष्टौ अवयक्ष्वनो ।
वरुणं रराणो वीहि मृडीकम्
सुहवो न एधि स्वाहा ॥ इदमग्नीवरुणाभ्याम् ।

ॐ अयाश्चाग्ने अनभिशस्तिपाश्च
सत्वमित्वमया असि ।
अयानो यज्ञं वहास्ययानो
धेहि भेषजं स्वाहा ॥ इदमग्नये ।

ॐ ये ते शतं वरुण ये सहस्रम्

यज्ञियाः पाशा वितता महान्तः ।
तेऽभिर्नो अद्य सवितोत विष्णु
र्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥
इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः।
ॐ उदुत्तमं वरुणपाशमस्म
दवाधमं विमध्यमं श्रथाय ।
अथा वयमादित्यव्रते
तवानागसोऽदितये स्याम स्वाहा ॥
इदं वरुणाय । अग्नये वा सर्वत्र ।

ततोऽग्नेर्गर्भाधानादिकाः क्रियाः प्रणवेन पृथक् पृथगष्टाभि राज्याहुतिभिः कुर्य्यात् ।

प्रथममष्टाहुतीर्हुत्वा अग्नेर्गर्भाधानमस्त्विति वदेत् । एवमन्येषामपि गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरण-निष्क्रमणान्नप्राशन-चूड़ोपनयन-विद्यारम्भ-समावर्त्तन-गोदानोद्वाहाख्याः क्रियाः कुर्य्यात् ।

अग्निमूर्त्तिं ततो ध्यात्वा होमकर्म समारभेत् ।
दधीभिर्गोत्रसम्भूतं प्रवरं हृतकौशिकम् ॥
लम्बोदरं चतुर्बाहुं पीनदेहं सुशोभनम् ।
स्रुवं दक्षिणके हस्ते स्रजमूर्द्धं प्रकल्पिताम्[१] ।
धारयन्तं स्रुचं वामे ऊर्द्धं अक्षिसमन्वितम् ॥
योगाभ्यासरतं रक्तं रक्तमाल्यानुशोभितम् ।

१ ख पुस्तके, अन्नमूर्द्धं प्रकल्पितम् ।

शिखाभिः सप्तभिर्युक्तं सप्तजिह्वासमन्वितम् ॥
प्रस्फुरन्तं महादीप्तं प्रज्वलन्तं विचिन्तयेत् ।
वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।
शयानमाज्यहोमे तु निषण्णं शेषवस्तुषु ॥

ततोऽग्नेर्नाम कृत्वा गन्धादिभिरभ्यर्च्च्य मूलमन्त्रेणाष्टावाज्याहुतीर्हुत्वा अग्निदैवतयोरैक्यं विचिन्त्य प्रकृतहोमं कुर्य्यात् ।

तत्र यदि अग्निः चलति प्रणीता वा चलति यदि वा परिस्तरणं दग्धं भवति तदा,—

स्वेन स्वेनैव मन्त्रेण स्थापयेत्तत् समाहितः । तद्दोषप्रशमनार्थं घृताष्टाहुतीर्जुहोति ॐ विष्णोररराटमसीति मन्त्रेणेति ।

ततः प्रकृतहोमं समाप्य व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा ॐ प्रजापतये स्वाहा इदं प्रजापतये ॐ अग्नये स्विष्टिकृते स्वाहा इदमग्नये स्विष्टिकृते ।

ॐ यदस्य कर्म्मणोऽत्यरीरिचं
यद्वा न्यूनमिहाकरं ।
अग्निस्तत् स्विष्टकृद्विद्वान्
सर्व्वं स्विष्टं सुहुतं करोतु मे स्वाहा ॥

ततः पूर्व्ववत् पर्य्युक्षणं, अनुमन्यस्वस्थाने अन्वमंस्थाः, प्रसुवस्थाने प्रासावीतिपदोहेन कार्य्यम् ।

तथाचापस्तम्बः—

पूर्व्ववत् परिषेचनं अन्वमंस्थाः प्रासावीति मन्त्रसंस्कार इति ॥

ततो मृड़नामानमग्निं कृत्वा पूर्णां दद्यात् ।

कपिलपञ्चरात्रे,—

कृत्वा तु मृड़नामाग्निमभ्यर्च्च्य प्रयतः पठेत्।
सहस्रार्च्चिर्महातेजा नमस्ते बहुरूपधृक्॥
सर्व्वाग्निने सर्व्वगत पावकाय नमोऽस्तु ते।
त्वं रौद्रघोरकर्म्मा च घोरहा त्वं नमामि ते।
विष्णुस्त्वं लोकपालोऽसि शान्तिमद्य प्रयच्छ मे॥
सर्पिषा स्रुचमापूर्य्य पुष्करोपर्य्यधोमुखम्।
स्रुगुपरि स्रुवं दत्वा पुष्पं कुचं प्रदापयेत्॥
सव्योत्तरकराभ्यां वै सम्पुटाभ्यां च शङ्खवत्।
संस्थोत्थाय संलग्नौ नाभौ तिर्य्यङ्निधाय च॥
पूर्णा दर्व्वीति मन्त्रेण मूलेन च सुसंयतः।
दद्यात् पूर्णाहुतीस्तिस्रः सर्व्वकामप्रपूरणीः॥

ॐ पूर्णा दर्व्वि परापत सुपूर्णा पुनरापत।
वस्नेव विक्रीणा वहा इषमूर्ज्जं शतक्रतो स्वाहा॥

ॐ सप्त ते अग्ने समिधः सप्तजिह्वाः
सप्तर्षयः सप्तधाम प्रियाणि।
सप्तहोत्राः सप्तधा त्वायजन्ति
सप्तयोनीरापृणस्व घृतेन। स्वाहा॥

ॐ पुनस्त्वादित्या रुद्रा वसवः
समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः।
घृतेन त्वं तनुं वर्द्धयस्व
सत्याः सन्तु यजमानस्य कामाः॥ स्वाहा॥

स्वाहान्तेन मूलमन्त्रेण च पूर्णाहुतिं समाप्य ब्रह्मदक्षिणां दत्वा अग्निं विसर्ज्जयेत् ॥

ॐ समुद्रं गच्छ स्वाहा, देवं सवितारं गच्छ स्वाहा, अन्तरीक्षं गच्छ स्वाहा, मित्रावरुणौ गच्छ स्वाहा, अहोरात्रे गच्छ स्वाहा, छन्दांसि गच्छ स्वाहा, द्यावापृथिवी गच्छ स्वाहा, सोमं गच्छ स्वाहा, यज्ञं गच्छ स्वाहा, दिव्यं नभो गच्छ स्वाहा, अग्निं वैश्वानरं गच्छ स्वाहा, मनो मे हार्द्दि यच्छ।

इत्यग्निं विसृज्य

ॐ दिवं ते धूमो गच्छत्वन्तरीक्षं ज्योतिः।
पृथिवीं भस्मना पृण स्वाहा ॥

इति दुग्धेन पृथिवीं शीतलयेत्।

इत्यग्निसंस्कारविधिः ॥

अग्नेर्नामान्युक्तानि कपिलपञ्चरात्रे—

लौकिके पावको ह्यग्निः प्रथमः परिकीर्त्तितः।
अग्निस्तु मारुतो नाम गर्भाधानेऽभिधीयते ॥
पुंसवने चन्द्रनामा शुङ्गाकर्म्मणि शोभनः।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्म्मणि ॥
नाम्नि वै पार्थिवो नाम प्राशने च शुचिस्तथा।
सत्यनामाऽथ चूड़ायां व्रतादेशे समुद्भवः ॥
[1]गोयज्ञे सूर्य्यनामेति विवाहे योजकः स्मृतः।
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथापरे ॥

---

१ ख पुस्तके, गोदाने।

आवसथ्ये भवो ज्ञेयो वैश्वदेवे च पावकः।
पूर्णाहुत्यां मृड़ो नाम शान्तिके वरदस्तथा॥
पौष्टिके बलदश्चैव क्रोधोऽग्निरभिचारिके।
प्रायश्चित्ते विधुश्चैव पाकयज्ञे हुताशनः।
देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः॥
वश्यार्थे कामदो नाम वनदाहे तु सूतकः।
कोष्ठे तु जाठरोऽग्निस्तु क्रव्यादो मृतके तथा॥
समुद्रे वाड़वो ह्यग्निः चये सम्वर्त्तको भवेत्।
लक्षहोमे च वह्निः स्यात् कोटिहोमे हुताशनः॥

मत्स्यसूक्ते,—

प्रतिष्ठायां लोहितस्तु वास्तुयागे प्रजापतिः।
जलाशयप्रतिष्ठायां वरुणः समुदाहृतः॥
एतानि होमे नामानि ज्ञातव्यानि हविर्भुजः।
आहूय चैव होतव्यं यो यत्र विहितोऽनलः॥
गणपतिभट्टतनूजो गोविन्दानन्दपण्डितः श्रीमान्।
समकृत सन्तोषार्थं सत्ववतां दानकौमुदीमेताम्॥
सर्व्वान्तर्यामिणे तस्मै गोविन्दाय नमो नमः।
यत्रानुरागं धास्यन्ति यत्कृपाभिर्विपश्चितः॥

इति श्रीगोविन्दानन्दकविकङ्कणाचार्य्यविरचितायां
क्रियाकौमुद्यां दानकौमुदी नाम द्वितीयो
यामः समाप्तः॥

---